THE

PRINCESS OF WALES

# SARASWATĪ BHAVANA TEXTS



EDITED BY

Mahāmahopādhyāya

GOPĪ NĀTHA KAVIRĀJA, M. A.

---

THE

# NṚISIṂHA PRASĀDA

## S'RĀDDHA SĀRA



*Printed by Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

---

1934

श्रीदलपतिराजविरचितः

# नृसिंहप्रसादः

## श्राद्धसारः ।

श्रीकाशीहिन्दुविश्वविद्यालय प्रधानवेदाध्यापकेन पण्डितप्रवरेण
श्रीविद्याधरशर्मणा टिप्पण्यादिभिः संयोज्य संशोधितः ।

---

THE

# NṚISIMṂHA PRASĀDA

## S'RĀDDHA SĀRA

of

S'RĪ DALAPATIRĀJA

*Edited with Introduction etc.,*

By

VEDĀCHĀRYA

PANDIT SRI VIDYĀDHARA SHARMA

First Professor of Veda, Benares Hindu University

Benares.

---

# श्राद्धसारभूमिका ।



इदमिदानीमनेकप्रकरणपरिबृंहितस्य नृसिंहप्रसादाख्यस्य महतो धर्मशास्त्रग्रन्थस्यैकतमं प्रकरणं श्राद्धसाराख्यं मुद्राप्य प्रकाशं प्राप्यते।

सत्स्वपि बहुषु श्राद्धमञ्जरी-श्राद्धकौमुदीप्रभृतिषु श्राद्धप्रक्रियाप्रतिपादकेषु ग्रन्थेषु मुद्रितेषु अस्यापि मुद्रणे बद्धादरा वयमित्यत्र निदानमिदमेव यदितरग्रन्थापेक्षया ग्रन्थेऽस्मिन् लेखनवैशद्यं पङ्क्तिसारल्यं विषयसौष्ठवं प्रमाणबाहुल्यं सर्वसामान्योपकारिता चेत्येवमादिभिर्गुणैरुपशोभितत्वम् ।

प्रायशो हि अद्यत्वे विद्वांसोऽपि सारल्यपक्षपातिनोऽतिकर्कशरीतिरञ्जिते कठिनविषयविलाससलसिते परिश्रमपरिप्राप्ये विषये नोत्सहन्त एव पथि पदमर्पयितुम् । किं पुना रीतिं निष्ठुरामपरिचितवन्तः ।

अतस्तादृशां मतिमनायांस्यैवाऽपेक्षितमंशमर्पयन्नयं ग्रन्थराजः सर्वथा संग्राह्य इति बुध्यैवाऽस्माभिर्व्यापृतमत्र ।

एतन्मुद्रणार्थं यतमानैरस्माभिरासादितमेकमेवादर्शपुस्तकं, यत् महामहोपाध्याय पण्डितप्रवर श्रीगोपीनाथकविराज महोदयैः कृपया सरस्वतीभवनाद्दापितम् ।

ग्रन्थकृताऽनेन ग्रन्थेऽस्मिन् द्वादश प्रकरणानि निबद्धानि येषां नामानि ग्रन्थकृतैव संस्कारसारे उल्लिखितानि—१. संस्कारसारः, २. आह्निकसारः, ३. श्राद्धसारः, ४. कालनिर्णयसारः, ५. व्यवहारसारः, ६.

प्रायश्चित्तसारः, ७. कर्मविपाकसारः, ८. व्रतसारः, ९. दानसारः, १०. शान्तिसारः, ११. तीर्थसारः, १२. प्रतिष्ठासारः, इति ।

एवं समयोपयोगिनस्सर्वानपि विषयान् अपरिहरता एकैकमपि विषयं यावदुपलम्भं प्रमाणैः परिपुष्णता सारल्येन वैशद्येन च ग्रन्थस्यास्य निखिलोपयोगितामापादयता च सुबहूपकृतो धार्मिको लोकोऽनेनेति नेयमतिशयितोक्तिः ।

किञ्चायं निबन्धकारः स्वीयमिमं निबन्धं क्वचिद्विशेषदृष्टिविरहितं सर्वानुकूलमेव कर्तुमनाः प्रावर्तत इति न केवलं तत्प्रतिज्ञया—

"आश्वलायनाऽऽपस्तम्बयाज्ञवल्क्यमतानुगाः ।
श्रीनृसिंहप्रसादेन क्रियां कुर्वन्तु नित्यशः ।
तत्र गृह्यानुसारेण कारिकादर्शनेन च ।
ज्योतिश्शास्त्रादिदृष्ट्या च यथामति विविच्यते" ।
इति संस्कारसारारम्भे कृतया,

"अनेकान् सुनिबन्धांस्तु पर्यालोच्य प्रयत्नतः
कारिका—गृह्यवृत्यादिग्रन्थानालोड्य सर्वशः ।
पद्धत्यादि यथाबुद्धि चन्द्रशेखरनिर्मितम् ।
चतुश्शाखासु विहितं श्राद्धकर्मसु विस्तृतम् ।
वेदाभिहितमार्गस्य रक्षणायाऽभिधीयते ॥"

इत्येतत्प्रकरणारम्भकृतया च प्रतीयते, आमूलचूलं ग्रन्थपरिशीलनयाऽपि चाऽयमर्थस्साधु अवगम्यते ।

किञ्चाऽयं तत्तत्प्रकरणाऽऽरम्भ एव तत्तत्प्रकरणप्रतिपाद्यान् विषयान् साधु सङ्कलयन् आदावेव श्रोतृमनस्समादधाति इत्ययमपरो विशेषो ग्रन्थस्याऽस्य ।

## ग्रन्थकर्तुः समयो देशश्च ।

एवं सुन्दरतमं सारवत्तमं च ग्रन्थमिमं रचयन् ग्रन्थकर्ता कं देशं कं च कालमलंचकार इति विचारपथमानीतोऽयं विषय उपरितनैः प्रमाणैरुपलब्धैर्विचार्य निर्णीयते—

एतत्प्रकरणावसाने—श्रीमत्प्रौढ प्रतापमहाराजाधिराजसर्वपुरीसुन्दरी देवगिरिपुरवराधीश्वर—सकलविद्याविशारदयाज्ञवल्कयीयलुप्तशाखाप्रवर्तकद्विजकुलाऽलङ्कार हीर श्रीवैष्णवमार्गप्रवर्तक श्रीवल्लभात्मजश्रीवल्लभपण्डित प्रसादासादित सूर्य्यपण्डिताभिधगुरु-मन्वादिप्रणीतनीतिशास्त्राभिज्ञ महाप्रभु स्वकार्यवीक्षण प्रतिनिधीकृत" इत्यादि लिखति ।

अनेनेदमवगम्यते—ग्रन्थकृदयं श्रीनिजामसाह महीभृतः करणाधीश्वरपदमध्यतिष्ठत् । पितुरस्य नाम श्रीवल्लभपण्डितः, गुरुस्सूर्य्यपण्डितनामा, राज्ञा च स्वकार्यवीक्षणाय प्रतिनिधीकृतः, अखण्डपाण्डित्यवान्, शुक्लयजुर्वेदीयश्चेत्यादि ।

महाराजस्य सकलयवनसार्वभौमस्य निजामसाहस्य समयः ऐतिहासिकैः १४९० तः १५०८ ई० पर्यन्तः इत्युरीकृतम् ।

अयम् अहमदनगरसाम्राज्यसंस्थापक आसीत् । पुत्रोऽस्य बुरहाण निजामसाहः १५०८, तः १५३३, पर्यन्तं राज्यमकरोत् । अनयोरन्यतरोऽनेन ग्रन्थकृता उल्लिखित इति वक्तुं शक्यते ।

किञ्चाऽनेनोल्लिखितस्सूर्य्यपण्डितः श्रीमदेकनाथाभिधस्य महाराष्ट्रसाधोः पिताऽऽसीदिति श्रोकाने महाशयेन स्वकीये धर्मशास्त्रेतिहासाख्ये ग्रन्थे उल्लिखितम् । सोऽयमेकनाथः पण्डितवर्य्यः, मीमांसान्यायप्रकाशकर्तुरापदेवस्य द्वितीयस्य प्रपितामह आसीत्, इति अनन्तदेवकृत स्मृतिकौस्तुभस्थश्लोकैरवगम्यते । ते यथा—

"आसीद्गोदावरीतीरे वेदवेदिसमन्वितः ।
श्रीकृष्णभक्तिमानेक एकनाथाऽभिधो द्विजः ॥

तत्सुतस्तद्गुणैर्युक्तस्सर्वशास्त्रार्थतत्त्ववित् ।
आपदेवोऽभवद्देवात् प्रोपयत्सकलान्मनून् ॥
मीमांसानयकोविदो मधुरिपोस्सेवासु नित्योद्यतो
विद्यादानविभावितोत्तमयशा आसीत् तदीयात्मजः ।
यस्याऽनन्तगुणैरनन्त इति सन्नामार्थवत्तां गतं
येनाऽवादि च वादिनां श्रुतिशिरस्सिद्धान्ततत्त्वं मुदे ॥
न्यायप्रकाशकर्ता निरवधिविद्यामृतप्रदस्सततम् ।
मीमांसाद्वयनयवित् तनयस्तस्याऽऽपदेवोऽभूत्" ॥ इति ।

आपदेवस्य समयः ईसवीय सप्तदशशताब्द्याः पूर्वो भाग इति-निर्णीतं मीमांसाकेसरिभिर्वेदविशारदैरस्मत्प्रियसुहृद्भिः पण्डिप्रवर श्रीचिन्नस्वामिशास्त्रिमहोदयैर्मीमांसान्यायप्रकाशभूमिकायाम् । तत्प्रपितामहस्यैकनाथस्य ततः पूर्वं एकशताब्दीति वक्तव्यम् । तत्समयश्चाऽयं दलपतिमहाराज इति ईसवीयषोडशशताब्द्याः पूर्वो भाग इत्येव निश्चेतव्यं भवति ।

किञ्च निर्णयसिन्धुकारस्य कमलाकरभट्टस्य समयः वै० सं १६६८. ई. १६११. इति तद्ग्रन्थादेवाऽवगम्यते । तत्पितृव्यस्य शङ्करभट्टस्य समयः ततः पञ्चाशतो वर्षेभ्यः पूर्वम् । अर्थात् १५६१ ई० समयः । भट्टशङ्करेण च स्वग्रन्थे द्वैतनिर्णये एतन्नामोल्लिखितम् । आर्यपुस्तकेषु केषुचित् उल्लेखनसमयोऽपि वर्णितः । यथा—व्यवहारसारे "११६९ वैशाखवदी ७ शुक्ले" इत्येकस्मिन्नादर्शे, संवत् १५६९ समये काशीपुरीविश्वेश्वरचरणसन्निधाने इति कर्मविपासारादौ, संवत् १५६८ वैशाखसुदी द्वितीयायां रवौ" इति तीर्थसारादर्शे च लिखितमस्ति । एतत्पर्यालोचनया च १८० ततः पूर्वभाव्यस्य ग्रन्थस्य समयः, ग्रन्थकर्तुश्च समय इत्यभ्यूहितुमस्त्यवकाशः ।

अतश्च पञ्चदशशताब्द्या अन्तिम भागः षोडशशताब्द्या आद्यश्च भाग एतद्ग्रन्थकृत्समय इत्यभ्यूहितुं शक्यते ।

## अस्य जन्मदेशः ।

अस्य चाभिजनः दक्षिणदेशे गोदावरीतीरस्थः कश्चन ग्रामः । अयं चान्ध्रब्राह्मणः काण्वशाखीयश्चेति प्रतीयते ।

अनेन हि—

"प्रौढश्री द्विजराजवंशतिलकालङ्कार हीरप्रभुः
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः"

इति स्वस्य भारद्वाजगोत्रोत्पन्नत्वं, प्रथमशाखीयत्वं च कण्ठत एवोद्‌घोष्यते ।

सर्वत्र देशे प्रथमशाखेति कण्वशाखामेव व्यवहरन्ति । काण्वशाखैव च दक्षिणदेशे विशेषतः प्रचलति । अतः काण्वशाखीयोऽयम् ।

दक्षिणदेशे गोदावरीतटनिकटवर्तिनि प्रान्तेऽस्ति कश्चन नृसिंहाचल इति प्रथितो गिरिवरः यत्र च भगवानादिपुरुषो नृसिंहरूपमास्थाय भक्ताननुगृह्णान आस्ते । तन्निकटवर्तिनो जनास्तमेव स्वकुलदैवतत्वेनाराधयन्ति, निबध्नन्ति च ग्रन्थेषु तत्स्तुतिमेव । अनेनापि

"श्रीनृसिंहं नमस्कृत्य दलाधीश महीपतिः ।
श्राद्धप्रसादं कुरुते सर्ववैदिकतुष्टये"

इति तत्तत्प्रकरणारम्भे नृसिंहनमस्कारकरणात् न केवलं सा रीतिरनुसृता । नृसिंहप्रसाद इति ग्रन्थस्यास्य नामकरणादपि स एव भगवान् नृसिंहोऽभिष्टुत इत्यवगम्यते ।

अतस्तद्देशवास्ययमित्यनुमीयते । तद्देशस्थितेनैवाऽनेनाऽयं ग्रन्थो व्यरचि परन्तु नातिचिरादेव ग्रन्थोऽयं वाराणसीं प्रापितोऽत्रत्यैस्तूर्णं सादरं प्रतिलिपीकृतश्चेति प्रतिभाति ।

तदिदमादर्शपुस्तकस्योपरि "काशीपुरीविश्वेश्वरसन्निधाने" इति लेखनादवगम्यते । सर्वथा "सार" इत्यन्वर्थनामा ग्रन्थोऽय सुधीजनोपादेयतामवश्यमर्हतीत्येव मत्वा तदुपकाराय प्रकाशितोऽस्माभिः । बहोः कालात्पूर्वमारब्धमुद्रणोऽप्ययं कार्यबाहुल्यवशात् मध्ये मध्ये

स्थगित इदानीमेवेषदिव प्राप्तपरमेश्वरानुकम्पो बहिरात्मानं प्रकाशयति। मन्येऽस्याऽन्येऽपि भागाः अचिरादेव प्रकाशमेष्यन्ति इति।

कार्येऽस्मिन् आदर्शपुस्तकदानेन शोधनादिकार्ये साहाय्याचरणेन च मह्यमत्यन्तमुपकारमाचरितवतां पण्डितप्रवराणां महामहोपाध्यायश्रीगोपीनाथशर्म महोदयानामाधमर्ण्यात् न कदाचिन्मुच्येय न कदाचित् विस्मरेयम्।

एतादृशानां ग्रन्थानां मुद्रणेन, प्रकाशनेन, विना हानिमात्मलाभं कञ्चिदप्यपश्यतामपि प्राचीनग्रन्थोज्जीवनेनैव परमात्मानं धन्यं मन्वतां तेषामेव श्री गोपीनाथ कविराज महोदयानां परिश्रममनल्पं बहुधाऽभिनन्दन् अचिरादेव चेतरेषामदसीयभागानां प्रकाशनं प्रतीक्षमाण एतावतैव विरमामि—



सुधीजनवशंवदः—

श्रीविद्याधरशर्मा

# श्राद्धसारविषयानुक्रमणिका।

श्रीः ।

श्रीलक्ष्मीसिंहाय नमः ।

# नृसिंहप्रसादः ।

## श्राद्धसारः ।

श्रीनृसिंहं नमस्कृत्य दलाधीशमहीपतिः ।
श्राद्धप्रसादं कुरुते सर्ववैदिकतुष्टये ॥
लिख्यते परिभाषाऽत्र प्रक्रियाऽनुक्रमेण तु ।
श्राद्धप्रशंसा प्रथमं देवतानां निरूपणम् ॥
ततः स्यादधिकारी हि श्राद्धेषु विविधेष्वपि ।
ततोऽपराह्णनिर्णीतिः क्रियते सर्वसम्मता ॥
प्रसङ्गादागतं किञ्चिद् बुद्धिस्थत्वान्निरूप्यते ।
पात्रं निरूप्यते पश्चान्निषिद्धानां निराकृतिः ॥
ततः परं तु क्रियते श्राद्धपाकविनिर्णयः ।
पाकयोग्यं ततो द्रव्यं ततो निर्णीयते ततः ॥
तच्च ( त्र ) भक्ष्यमभक्ष्यं किमेवं ( सर्वं ) भवति निर्णयः ।
शाकानां निर्णयः सम्यक् भक्ष्याभक्ष्यतया ततः ॥
द्रव्यशुद्धिरतः शुद्धिर्भूमेरादौ निरूप्यते ।
उदकस्य ततः शुद्धिरभिधेया सुविस्तृता ॥
सुवर्णरजतादीनामुच्यते शुद्धिरुत्तमा ।
द्रव्यरूपस्य शाकस्य शुद्धिः सम्यगिहोच्यते ॥

पश्चादन्नस्य शुद्धिश्च विस्तरेणाभिधीयते ।
ततः परं द्रव्यशुद्धिः शुद्धिः सम्यगिहोच्यते ।।
धनधान्यविशुद्धिश्च ततः परमिहोच्यते ।
ततो वस्त्रादिशुद्धिश्च सविशेषा निरूप्यते ।।
देहशुद्धिरतः पश्चात्सविशेषा निरूप्यते ।
पार्वणादिविभेदेन श्राद्धभेदनिरूपणम् ।।
नित्यकाम्यादिभेदेन सविशेषं ततः परम् ।
निरूपणञ्च क्रियते बहुसम्मतसम्मतम् ।।
श्राद्धदेशा अपि तथा प्रोच्यन्ते हि विशेषतः ।
तथा निषिद्धदेशानां निराकरणमिष्यते ।।
श्राद्धकालांस्ततो वक्ष्ये त्वष्टकाप्रभृतींस्तथा ।
काम्यान् रव्यादिकालांश्च व्यतीपातांस्तथा परान् ।।
निर्णीयते ततः श्राद्धं सम्यगापरपाक्षिकम् ।
त्रयोदशीचतुर्दश्योः श्राद्धनिर्णय उच्यते ।।
वर्ज्याः कालास्ततः सर्वेऽभिधीयन्ते विशेषतः ।
आशौचोत्तरकालं तु श्राद्धकर्तव्यतोच्यते ।।
गन्धद्रव्याणि सर्वाणि निर्णीयन्ते ततः परम् ।
धूपादिनिर्णयः पश्चात्सम्यगेवाभिधीयते ।।
ब्राह्मणानामियत्ता तु ततः परमिहोच्यते ।
अनेकश्राद्धसम्पाते वैश्वदेविकतन्त्रता ।।
निरूप्यते सुविशदाऽनेकग्रन्थविलोकनात् ।
पादप्रक्षालने रीतिः सविशेषा निरूप्यते ।।

शाखाभेदेन वै चार्घ्यपात्रादेस्तत्वनिर्णयः ।
सङ्कल्पे च तथा भेदो महानत्र निरूप्यते ।।
अग्नौकरणकृत्ये तु विशेषः सम्यगुच्यते ।
अनेकस्मृतिकाराणां सम्मतः शिष्टसम्मतः ।।
पृथिवीत्यादिसङ्कल्पविशेषश्चाभिधीयते ।
पिण्डनिर्वपणं पश्चात्सम्यगत्र निरूप्यते ।।
अनेकान् मुनिबन्धांस्तु पर्यालोच्य प्रयत्नतः ।
कारिकागृह्यवृत्त्यादिग्रन्थानालोड्य सर्वशः ।।
पद्धत्यादि यथाबुद्धि चन्द्रशेखरनिर्मितम् ।
चतुःशाखासु विहितं श्राद्धकर्म सुविस्तृतम् ।।
वेदाभिहितमार्गस्य रक्षणायाभिधीयते ।
नित्यश्राद्धप्रसङ्गेन दलाधिपमहीभुजा' इति ।।
तत्र श्राद्धं नाम प्रेतोद्देशेन श्रद्धया द्रव्यत्यागः ।

तदुक्तं ब्रह्मपुराणे—

"देशे काले च पात्रे च श्रद्धया विधिना च यत् ।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्" इति ।

तथा—

"होमश्च पिण्डदानञ्च तथा ब्राह्मणतर्पणम् ।
श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिकः" ।।

श्राद्धशब्द इति शेषः । तच्च श्राद्धमवश्यमनुष्ठेयम् ।

तदाह मनुः—

"श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् ।
तस्मात्सर्वप्रयत्नेन श्राद्धं कुर्याद्विचक्षणः" इति ।

विषयप्ररोचनामपेक्षमाणः कुर्यादित्ययं विधिः स्वविषयप्ररोचकानि वाक्यान्यपेक्षते, तानि च याज्ञवल्क्यादिप्रणीतानि कानिचित् क्रियाप्ररोचकानि, कानिचित्कर्तव्यतायाः, तत्राद्यानि तावत्प्रदर्श्यन्ते ।

तत्र ब्रह्मपुराणे—

"तस्माच्छ्राद्धं नरो भक्त्या शाकैरपि यथाविधि ।
कुर्वीत कुर्वतः श्राद्धं कुले कश्चिन्न सीदति" ॥

कूर्मपुराणे—

"यो येन विधिना श्राद्धं कुर्यादेकाग्रमानसः ।
व्यपेतकल्मषो नित्यं याति नावर्तते पुनः" ॥

नागरखण्डे—

"कालान्तरेषु ते तोयं लभन्ते नान्नमेव च ।
न दत्तं वंशजैर्येषां ते व्यथां यान्ति दारुणाम् ॥
क्षुत्पिपासासमुद्भूतां, तस्मात्सन्तर्पयेत् पितॄन् ।
नित्यं शक्त्या यथा राजंस्तोयैर्भोज्यैः पृथग्विधैः ॥
तथान्यैर्वस्त्रनैवेद्यैः पुष्पगन्धानुलेपनैः ।
तर्पितास्ते प्रयच्छन्ति कामानिष्टान् हृदि स्थितान् ॥
त्रिवर्गश्च महाराज ! पितरः श्राद्धतर्पिताः ।

तथा विष्णुपुराणे--

पितृगीतास्तथैवात्र श्लोकास्तान् शृणु पार्थिव ! ।
तथैव भवता भाव्यं तेन तत्र धृतात्मना ॥
अपि धन्यः कुले जातो योऽस्माकमतिमात्रतः ।
अकुर्वन् वित्तशाठ्यं यः पिण्डान्नो निर्वपिष्यति ॥

यमस्मृतौ—

"इमं मन्त्रं विधिश्रेष्ठं कामार्थं कथि(ल्पि)तं द्विजैः ।
ये विप्रा ह्यनुवर्तन्ते तेषां लोकाः सनातनाः ॥
आयुः पुत्रान्यशः स्वर्गं कीर्तिं पुष्टिं बलं श्रियम् ।
पशून्सौख्यं धनं धान्यं प्राप्नुयात्पितृपूजनात्" ॥

ब्रह्मपुराणे—

"एवं सम्यग्गृहस्थेन देवताः पितरस्तथा ।
सम्पूज्या हव्यकव्येन अन्नेनापि स्वबान्धवाः ॥
परत्र च परां पुष्टिं लोकांश्च विपुलान् शुभान् ।
श्राद्धकृत्समवाप्नोति यशश्च विपुलं नरः" ॥

विष्णुधर्मोत्तरे—

"अद्यप्रभृति लोकेषु प्रेतानुद्दिश्य वै पितॄन् ।
ये तु श्राद्धं करिष्यन्ति तेषां पुष्टिर्भविष्यति ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
तेषां त्रयः पूजिताश्च भविष्यन्ति तथाऽग्नयः ॥
त्रयो वेदाश्च लोकाश्च त्रयो, देवास्तथैव च ।
पूजिताश्च त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥

श्राद्धकाले तथाऽन्नेन पिण्डनिर्वपणं तथा ।
पितृणां ये करिष्यन्ति तेषां पुष्टिर्भविष्यति ॥
पूजितस्तैर्भविष्यामि चतुरात्मा तथाऽप्यहम् ।
पितृपैतामहः पिण्डो वासुदेवः प्रकीर्तितः ॥
पैतामहश्च निर्दिष्टस्तथा सङ्कर्षणः प्रभुः ।
पितृपिण्डश्च विज्ञेयः प्रद्युम्नश्चापराजितः ॥
आत्माऽनिरुद्धो विज्ञेयः पिण्डनिर्वपणं बुधैः" ।

पितृपितामहस्यायं पितृपैतामहः । प्रपितामहपिण्ड इति यावत् ।

"एवं सम्पूजितास्तेन चतुरात्मा बहिस्थिताः ।
चत्वारः पूजिता वेदाश्चत्वारश्च तथाश्रमाः ॥
पुरुषार्थाश्च चत्वारश्चतस्रश्च तथा दिशः ।
चत्वारश्च तथा वर्णाश्चत्वारश्च तथा युगाः ॥

तथा देवलः—

"आरोगः प्रकृतिस्थश्च चिरायुः पितृपुत्रवान् ।
अर्थवानर्थयोगी च श्राद्धकामो भवेदिह ॥
परत्र च परां तुष्टिं लोकाँश्च विविधान् शुभान् ।
श्राद्धकृत्समवाप्नोति श्रियं च विपुलां नरः" ॥

च शब्दात्कीर्तिमपि । स्वज्ञातिषु ख्यातिर्यशः, इतरत्र ख्यातिः कीर्तिः । यद्वा—दानपुण्यफला कीर्तिः, प्रतापस्य फलं यशः, इति तयोः पुराणाभिहित एव भेदः । एतदुद्देशेन श्राद्धं नैवाऽनुष्ठेयं आवर्जनीयतयोभयप्राप्तेरावश्यकत्वात् ।

याज्ञवल्क्यः—

"आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः" ॥

यमः—

"ये यजन्ति पितॄन् देवान्ब्राह्मणांश्च हुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥

ब्राह्मणांश्चेत्यत्र पूजयन्तीत्यध्याहारः । यजेर्यजदेवपूजासङ्गतिकरणदानेष्विति पूजायामपि कथञ्चित्प्रयोगदर्शनात् ।

तथाऽन्यत्र—

"आयुः पुत्रान्यशः स्वर्गं कीर्तिं पुष्टिं बलं श्रियम् ।
पशून् सुखं धनं धान्यं प्राप्नुयात्पितृपूजनात्" ॥

ब्रह्मपुराणे—

"एवं विधानतः श्राद्धं कृत्वा स्वविभवोचितम् ।
आब्रह्मस्तम्बपर्यन्तं जगत्प्रीणाति मानवः ॥
ब्रह्मेन्द्ररुद्रनासत्यसूर्यानिलसुमारुतान् ।
विश्वेदेवान् पितृगणान्पर्यग्निमनुजान्पशून् ॥
सरीसृपान्पितृगणान्यच्चान्यद् भूतसंज्ञितान् ।
श्राद्धं श्रद्धान्वितः कुर्वन्प्रीणयत्यखिलं जगत् ॥

तदुक्तं मार्कण्डेयपुराणे—

"अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ।
तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः ॥

यच्चाम्बु स्नानवस्त्रोत्थं भूमौ पतति पुत्रक ?।
तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते ॥
याः सुगन्धाम्बुकणिकाः पतन्ति धरणीतले ।
ताभिराप्यानं तेषां ये देवत्वमुपागताः" ॥

ब्रह्मपुराणे—

"उद्धृतेष्वपि पिण्डेषु याश्चाम्बुकणिका भुवि ।
ताभिराप्यायनं तेषां ये तिर्यक्त्वं कुले गताः ।
ये चादन्ताः कुले बालाः क्रियायोगा ह्यसंस्कृताः ।
विपन्नास्ते तु विकिरसम्मार्जनजलाशिनः ॥
भुक्त्वाचाचमनं यच्च जलाद्यच्चाङ्घ्रिशोधनम् ।
एवमाप्यायनं वत्स ? बहूनामपि बान्धवैः ॥
श्राद्धं कुर्वद्भिरन्नाप्सु(आशु)शाकैरपि हि जायते ।

तथा स्कान्दे—

"अन्यायोपार्जितैरर्थैः यच्छ्राद्धं क्रियते नरैः ।
तृप्यन्ति तेन चाण्डालपुल्कसाद्यासु योनिषु ॥
गतपापा विशुद्ध्यन्ति ब्राह्मण्यमुपयान्ति ते ।
ब्राह्मणानां तथैवान्ये न तृप्तिं प्रापयान्ति वै (तैः) ॥
पिशाचत्वमनुप्राप्य कृमिकीटत्वमेव च ।
एवं ये यजमानस्य यच्च तेषां द्विजन्मनाम् ॥
कश्चिज्जलादिविक्षेपः शुचिरुच्छिष्टमेव वा ।
तेनान्येन प्रकारेण तत्तद्योन्यन्तरं गताः ॥
प्रयान्त्याप्यायनं वत्स? सम्यक्श्राद्धक्रियावताम्" । इति ।

तथा नागरखण्डे—

"श्राद्धे तु क्रियमाणे वै न किञ्चिद्व्यर्थतां व्रजेत् ।
उच्छिष्टमपि, राजेन्द्र तस्माच्छ्राद्धं समाचरेत्" ॥

एवं श्राद्धक्रियाद्वारा श्राद्धप्रशंसाऽभिहिता । इदानीं पितृरूप-देवताप्रसङ्गेन श्राद्धप्रशंसाऽभिधीयते—

वायुपुराणे—

"इत्येते पितरस्तात देवानामपि देवताः ।
प्रजापतिमुखा ह्येते सर्वेषां तु महात्मनाम् ॥
आद्यो गणस्तु योगानां स नित्यं योगवर्धनः ।
द्वितीयो देवतानां च तृतीयो देववैरिणाम् ॥
शेषास्तु बर्हिणां ज्ञेया इति सर्वे प्रकीर्तिताः ।
देवास्त्वेतान्यजन्ते वै सर्वेष्वेव व्यवस्थितान् ॥
आश्रमास्तु यजन्ते तान् चत्वारस्तु यथाक्रमम् ।
वर्णाश्चैव यजन्ते तान् चत्वारश्च यथाविधि ॥
यथा सङ्करजाताश्च म्लेच्छाश्चैव यजन्ति वै ।
सदा वै पितरः पूज्याः स्रष्टारो देशकालयोः ॥
पितृभक्त्या ततो नित्यं योगं प्राप्नोत्यनुत्तमम् ।
योगेन मोक्षं लभते हित्वा कर्म शुभाशुभम् ॥
यज्ञहेतोर्यदुद्धृत्य मोहयित्वा जगत्तदा ।
गुहायां निहितो योगः काश्यपेन महात्मना ॥
तं च योगं समासेन पितृभक्तस्तु कृत्स्नशः ।

अयत्नात् प्राप्नुयाज्जन्तुः सर्वथैव न संशयः ॥
यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा ।
क्षिप्रं प्राप्नोति तत्सर्वं पुरुषः श्राद्धकृत्तथा ॥
विद्यार्थी प्राप्नुयाद्विद्यां पुत्रार्थी पुत्रमाप्नुयात् ।
राजा तु लभते राज्यमधनश्चोत्तमं धनम् ॥
क्षीणायुर्लभते चायुः पितृभक्त्या सदा नरः" ॥ इति ।

ब्रह्मवैवर्तपुराणे—

"नहि योगगतिः सूक्ष्मा न पितॄणां परागतिः ।
तपसापि न दृश्याऽसौ किं पुनर्मांसचक्षुषा ॥
चत्वारः पितरो मूर्ता मूर्तिहीनास्त्रयस्तथा ।
तेषां श्राद्धानि सत्कृत्य देवाः कुर्वन्ति यत्नतः ॥
भक्ताः प्राञ्जलयः सर्वे सेन्द्रास्तद्गतमानसः ।
विश्वे च वसवश्चैव पृष्ठिनः शृङ्गिणस्तथा ॥
कृष्णाः श्वेतास्त्वजाश्चैव विधिवत्पूजयन्त्युत ।
प्रजाता वातरसना दिवाकृत्यास्तथैव च ॥
मेघाश्च मरुतश्चैव ब्रह्माद्याश्च दिवौकसः ।
अत्रिभृग्वङ्गिराद्याश्च ऋषयः सर्व एव च ॥
यक्षा नागाः सुपर्णाश्च किन्नरा राक्षसैः सह ।
पितॄँस्तेऽपूजयन् सर्वे नित्यमेव फलार्थिनः ॥
एवमेते महात्मानः श्राद्धे सत्कृत्य पूजिताः ।
सर्वान् कामान्प्रयच्छन्ति शतशोऽथ सहस्रशः ॥
हित्वा त्रैलोक्यसंसारं जरामृत्युभयं तथा ।

मोक्षं योगमथैश्वर्यं सूक्ष्मदेहमदेहताम् ॥
कृत्स्नं वैराग्यमानन्त्यं प्रयच्छन्ति पितामहाः ।
वरिष्ठः सर्वधर्माणां मोक्षधर्मः सनातनः ॥
पितॄणां हि प्रसादेन प्राप्यते सुमहात्मना ।
आयुः पुत्रान् धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥
राज्यं चापि प्रयच्छन्ति प्रीताः पितृगणा नृप ? ।
रतिशक्तिः स्त्रियः कान्ता भोज्ये भोजनशक्तिता ॥
दानशक्तिः स्वविभवा रूपमारोग्यमेव च ।
श्राद्धपुष्पमिदं प्रोक्तं फलं ब्राह्मणसङ्गमः ॥
श्रूयते हि पुरा मोक्षं प्राप्ताः कौशिकसूनवः ।
पञ्चभिर्जन्मसम्बन्धैः प्राप्ता ब्रह्मपदं परम् ॥
कौशिको नाम धर्मात्मा कुरुक्षेत्रे महानृषिः ।
नामतः कर्मतश्चास्य सुतान् सप्त निबोधत ॥
स्वसृमः क्रोधनो हिंस्रः पिशुनः कविरेव च ।
वाग्दुष्टः पितृवर्त्ती च गर्गशिष्यास्तदाऽभवन् ॥
पितर्युपरते तेषामभूद् दुर्भिक्षमुल्बणम् ।
अनावृष्टिश्च महती सर्वलोकभयङ्करी ॥
गर्गादेशाद्वने दोग्ध्रीं रक्षन्तस्ते तदा द्विजाः ।
हनामः कपिलामेकां वयं क्षुत्पीडिता भृशम् ॥
इति चिन्तयतां तेषां लघु प्राह तदाऽनुजः ।
अथाऽवश्यमियं वध्या श्राद्धरूपेण योज्यताम् ॥
श्राद्धे नियोज्यमानेयं पापात् त्रास्यति नो ध्रुवम् ।

एवं कुर्वित्यनुज्ञातः पितृवर्ती तदाऽग्रजैः ॥
चक्रे समाहितः श्राद्धमालभ्य कपिलां स ताम् ।
द्वौ देवे भ्रातरौ कृत्वा पित्र्ये त्रींश्चापरान् क्रमात् ॥
तथैकमतिथिं कृत्वा श्राद्धदः स्वयमेव तु ।
चकार मन्त्रवच्छ्राद्धं स्मरन् पितृपरायणः ।
तथा गवा विशङ्कास्ते गुरवे वै न्यवेदयन् ॥
व्याघ्रेण निहिता धेनुर्वत्सोऽयं प्रतिगृह्यताम् ।
एवं सा भक्षिता धेनुः सप्तभिस्तैस्तपोधनैः ॥
वैदिकं बलमाश्रित्य क्रूरे कर्मणि निर्भयैः ।
ततः कालापकृष्टास्ते व्याधा दाशपुरेऽभवन् ॥
जाता व्याधा दशार्णेषु सप्त धर्मविचक्षणाः ।
जातिस्मराः सप्त मृगा जाताः कालञ्जरे गिरौ" । इति ।

इति श्रीमल्लक्ष्मीनृसिंहचरणसरोरुहभ्रमरसमस्तभूमण्डलमण्डनसमस्तयवनाधीश्वर श्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारे श्राद्धमहिमा ।

---

# अथ पितरोऽभिधीन्ते ।

तत्र ते त्रिविधा मूर्ता अमूर्ता एकोद्दिष्टाशिनश्च । तदुक्तं ब्रह्माण्डपुराणे—

"अमूर्ता मूर्तिमन्तश्च पितरो द्विविधाः स्मृताः ।
नान्दीमुखास्त्वमूर्ताः स्युर्मूर्तिमन्तोऽथ पार्वणाः ॥
एकोद्दिष्टाशिनः प्रेताः पितॄणां निर्णयस्त्रिधा" । इति ।

वापुराणेऽपि पितृसृष्टिमुक्त्वोक्तम्—

"तान् दृष्ट्वा प्राह स ब्रह्मा तिर्यक्संस्थानधोमुखान् ।
भवन्तः पितरः सन्तु सर्वेषां गृहमेधिनाम् ॥
ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः" इति ॥

तथा ब्रह्माण्डे—

"क एते पितरो नाम वर्तन्ते क्व च ते विभो ? ।
पुत्रास्तु ते स्मृतास्त्वेषां कथं च पितरः स्मृताः ॥
कथं वा ते समुद्भूताः कस्य पुत्राः किमात्मकाः ।
स्वर्गे ते पितरोऽन्ये वै देवानामपि देवताः ॥
स्वर्गे च के तु वर्तन्ते पितरो नरके तु के ।
किमर्थं ते न दृश्यन्ते तत्र किं कारणं स्मृतम्" ॥

इत्यादि प्रश्ने द्विधोत्पत्तिरभिहिता । केचित्साक्षाद् ब्रह्मशरीरोत्पन्नाः केचिद् व्यवधानेन । तत्र तावत्साक्षादभिधीयन्ते—विष्णुपुराणे—

"सत्यमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ।
पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे ॥

उत्ससर्ज पितॄन्दृष्ट्वा ततस्तामपि स प्रभुः ।"

वायुपुराणे—

"ऋतमग्निस्तु यः प्रोक्तः स तु संवत्सरो मतः ।
जज्ञिरे ऋतवस्तस्मादृतुभ्यश्वार्त्तवास्तथा ॥
आर्तवा ह्यनुमासाख्याः पितरो ह्यनुसूनवः ।
ऋतुः पितामहा मासा आर्तवाश्चास्य सूनवः ॥
प्रपितामहास्तु वै देवाः पश्चाद्वा ब्रह्मणः सुताः" ॥ इति ।

अत्र संवत्सराभिमानिन्यो देवताः पितरः, न कालमात्रम् । स्थानाभिमानिन इत्यन्ये ।

कालिकापुराणे—

अव्यक्तजन्मतः पुत्रा ये मरीच्यादयः स्मृताः ।
तेषां पितृगणा मुख्या जातास्तेभ्यश्च देवताः ॥
देवेभ्यश्च जगत्सर्वं त्रैलोक्यं सचराचरम् ।
विधितत्वं परं वत्स ऋषीणां पितरः सुताः" ॥

तत्र या ब्रह्मशरीरात् पितॄणां साक्षादुत्पत्तिः पुराणेषु दृश्यते सा मरीच्यादीनां पितृत्वमपेक्ष्य, या तु ब्रह्मशरीराव्यवधानेन सा मरीच्यादिपुत्राणां पितृत्वमपेक्ष्येति विवेक्तव्यम् । अतो न विरोधः ।

ब्रह्मवैवर्तब्रह्माण्डपुराणयोः—

"तेषां सप्त समाख्याता गणास्त्रैलोक्यपूजिताः ।
अमूर्तयस्त्रयस्त्वेषां चत्वारश्च समूर्तयः ॥
उपरिष्टाच्च ये तेषां वर्तन्ते ते अमूर्तयः ।
तेषामधस्ताद्वर्तन्ते चत्वारः सूक्ष्ममूर्त्तयः ॥"

ततश्च मरीच्यादिपुत्राः पितरो मरीच्यादयः पितामहाः ब्रह्मा प्रपितामह इति ।

तथा नागरखण्डे—

"अग्निष्वात्ता बर्हिषद आज्यपाः सोमपाः स्मृताः ।
रश्मिपा उपहूताश्च तथैवायन्तुनः परे ॥
तथा स्वादुषदश्चान्ये स्मृता नान्दीमुखा नृप ?" । इति ॥

वायुसंहितायाम्—

महेश्वर उवाच ।

"अथापराश्च पितरो गुह्याः शृणु नरोत्तम ? ।
विष्णुः पिता ऽस्य जगतो दिव्यो यज्ञः स एव च ॥
ब्रह्मा पितामहो ज्ञेयो ह्यहं च प्रपितामहः" ॥ इति ।

एते ब्रह्मविष्णुमहेश्वराः पितरो विश्वसृष्टिहेतुत्वात् । पितृपितामहाद्यधिष्ठानभूताग्निष्वात्ताद्यधिष्ठातृत्वेन श्राद्धे पितरो देवतारूपास्तद्रूपेणानानुसन्धीयमानाः श्राद्धस्य कामपूर्विकामैहिकामुष्मिकफलोत्पादिकां शक्तिं जनयन्तीति । तथा पिण्डा अपि स्मृतिषु वरुणादिरूपतया उक्ताः । तथा हि—

"प्रथमो वरुणो देवः प्राजापत्यस्तथा परः ।
तृतीयोऽग्निः स्मृतः पिण्ड एष पिण्डविधिः स्मृतः" इति ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वर=श्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रासादे श्राद्धसारे पितृदेवतानिरूपणम् ।

# अथ श्राद्धाधिकारिनिर्णयोऽभिधीयते ।

तत्र कार्ष्णाजिनिः—

"पुत्रः शिष्योऽथवा पत्नी पिता भ्राता स्नुषा गुरुः ।
स्त्रीहारी धनहारी च कुर्युः पिण्डोदकक्रियाम् ॥

तथा गुरुः—

"प्रमीतस्य पितुः पुत्रैः श्राद्धं कार्यं प्रयत्नतः ।
ज्ञातिबन्धुसुहृत्पुत्रैर्ऋत्विक्कृत्यपुरोहितैः" । इति ।

अत्र पितुरित्यनेन मातुरपि ग्रहणम् । "मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः" इति सुमन्तुस्मरणात् । पुत्र इति औरसस्यैव ग्रहणम्; मुख्यतमत्वात्, तदभावे दत्तक=कृत्रिमादयो याज्ञवल्क्यप्रसिद्धा अवगन्तव्याः । तथा हि—(या.स्मृ.१२८।१३२)

"औरसो धर्मपत्नीजः तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः" । इति ।

उरसो जातो औरसः पुत्रः, स च धर्मपत्नीजः, सावर्ण्यधर्मविवाहोढा धर्मपत्नी, तस्यां जात औरसः पुत्रो मुख्यः । तदभावे दत्तको वाऽधिकारी, इतरेषां कलौ निषेधात् । तदाह—

"माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्तकः सुतः" इति ।

अद्भिरिति वक्ष्यमाणोपदेशकपूर्वकमिति । आपद्ग्रहणमनापदि निषेधति । प्रतिषेधश्च दातुरेव "न चैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा" इति वशिष्ठस्मरणात् । तथाऽनेकपुत्रवताऽपि ज्येष्ठः पुत्रो न देयः—

"ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः" इति

पुत्रकार्यकरणे मुख्यत्वात् । स्मृत्यन्तरादपि अयमेवार्थ उपलभ्यते—

"दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्" इति ।

अयमाशयः—अपत्यानि तावन्मातृपितृकारणद्वयप्रभवाणीति न तेषामेकः क्रयं प्रतिपादनमुत्सर्गं वा कर्तुं प्रभवति "शुक्रशोणित प्रभवः पुरुषो मातापितृनिमित्तकः, तस्य विक्रयप्रदानपरित्यागेषु मातापितरौ प्रभवत" इति वशिष्ठस्मरणात् । अतः प्रदानादावुभावपि हेतू इति स्थितं, तत्प्रतिग्रहप्रकारो वशिष्ठेनैवाभिहितः—

"पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राज्ञे निवेद्य निवेशनमध्ये महाव्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेनं प्रतिगृह्णीयात्" इति ।

अदूरबान्धवमिति अत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधः । ततश्च सन्निकृष्टग्रहणात् असन्निकृष्टबन्धुर्न पुत्रार्थं कर्तव्यः । अयं च प्रतिगृहीतुः पुत्रो न दातुः, स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं

दानमिति तल्लक्षणात् । तदुक्तं मनुना—

"गोत्ररिक्थे जनयितुर्न हरेद्दत्तकः क्वचित्" इति ॥

आस्तां तावदप्रकृतं, प्रकृतं तु पत्नीस्नुषाशिष्यादीनां श्राद्धाधिकारिणां वित्तलाभादिनाऽपि श्राद्धादिकरणमवश्यं द्रष्टव्यम् । ततश्च दम्पत्योः परस्परं शरीरार्धधर्तृत्वात् स्नुषादीनामेकशरीरान्वयवत्त्वेन, शिष्याचार्ययोश्च पितापुत्रवदुपचारात् श्राद्धाधिकार इति सर्वं मनोरमम् । तथा च स्मृत्यन्तरम्—

"औरसे सति नान्यस्य श्राद्धादिविधिकारिता ।

तदभावे तु पत्न्यादेः शास्त्राणामेष निश्चय" इति ।

तथा च व्याघ्रपादः—

"पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ।

पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः" इति ।

पुत्राभावे तु पत्नी स्यादित्यादिवचनबलादेव शिष्यादीनां पुत्राभाव एवाधिकारो नान्यथेति वेदितव्यम् । यदि पुत्रसद्भावेऽप्येषामधिकारो भवेत्तर्हि पत्न्याः को वाऽपराधः स्यात् येनासौ न कुर्यात्तस्मात्पुत्राभाव एव पत्नीशिष्यादीनामधिकारो नान्यथेति सिद्धम् । तथा च गौतमः—"पुत्राभावे सपिण्डाः शिष्याश्च तदभावे ऋत्विगाचार्याविे"ति ।

मातृसपिण्डा मातुलादयः सपिण्डालाभे समानोदकाः पिण्डं दद्युरिति । तदुक्तं मार्कण्डेयपुराणे—

"पुत्राभावे सपिण्डास्तु तदभावे सहोदकाः ।

मातुः सपिण्डा एव स्युर्ये वा मातुः सहोदकाः ॥

कुर्युरेवं विधिं सम्यगपुत्रस्य सुताः स्मृताः ।
कुर्यान्मातामहायैवं पुत्रिकातनयस्तथा ॥
सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम् ।
तदभावेऽपि नृपतिः कारयेदकुटुम्बिनाम् ॥
राजा कुर्यादभावे तु दाहाद्याः सकलाः क्रियाः ।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः" इति ।

तथा विष्णुपुराणे—

"पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वाऽपि क्रियार्हा नृप जायते ॥
तेषामभावे सर्वेषां समानोदकसन्ततिः" इति ।

ततः पुत्रेण पितुः श्राद्धं कर्तव्यं तदभावेऽन्यैरिति ।

एतदनुपनीतेनापि कर्तव्यम्—

"श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः ।
व्रतस्थो वाऽव्रतस्थो वा एक भव भवेद्यदि"

इति सुमन्तुस्मरणात् । अव्रतस्थोऽनुपनीतः । तदुक्तं वृद्धमनुना—

"कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः ।
पितृयज्ञाहुतिं पाणौ जुहुयाद् ब्राह्मणस्य सः" इति ।

अत्र व्याघ्रः—

"कृतचूडः स कुर्वीत उदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्" इति ।

मातापित्रोरिति शेषः ।

तथा स्मृत्यन्तरे—

"कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत् ।
उदाहरेत्स्वधाकारं नतु वेदाक्षराण्यसौ" इति ।

सुमन्तुना वेदाक्षराण्यपि प्रयोज्यानीत्यभिहितम्—

"नाभिव्याहारयेद् ब्रह्म यावन्मौञ्जी निबध्यते ।
मन्त्राननुपनीतोऽपि पठेदेवैक औरसः" इति ।

ततः पुत्रोऽधिकारी, सोऽपि मुख्यो गौणश्च, तदभावे पत्न्यादि, तदपि पौत्राद्यभावे ।

"पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
रिक्थे च पिण्डदाने च समौ तौ परिकीर्तितौ" इति ।

गुरुः पौत्रं गौणपुत्रसमानमुक्तावनिति सर्वमुक्तम् ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामशाहसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारे श्राद्धाधिकारिनिरूपणम् ।

# अथ जीवत्पितृकश्राद्धाधिकारोऽभिधीयते ।

तत्र मैत्रायणीयगृह्यपरिशिष्टनिष्ठं विशिष्टं विधिवाक्यम्——

"उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।

तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः" इति ।

षट्सङ्ख्या हि सङ्ख्येयपरिच्छेदं कुर्वती सङ्ख्येयावश्यकतां बोधयन्ती ततोऽन्यत्रानावश्यकतां सूचयति । उद्वाहोऽत्र द्वितीयोऽभिमतः । तत्र पुत्रस्यैवाधिकारात् । तदुक्तमभियुक्तैः—

"नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः ।

अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्" इति ।

प्रथमे च पितुरेवाधिकारः । तदुक्तं कर्मप्रदीपे—

"स्वपितृभ्यः पितादद्यात्सुतसंस्कारकर्मसु ।

पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् इति" ।

पिण्डशब्देन लक्षणया श्राद्धमुच्यते । पिण्डदोऽशहरश्चैषामितिवत् । पिता सुतसंस्कारकर्मसु गर्भाधानादिविवाहान्तेषु पिण्डान्नान्दीश्राद्धानि स्वपितृभ्यो दद्यात् । तेषां सुतानामोद्वहनात् आ उद्वहनम् विवाहमभिव्याप्येत्यर्थः । तया च स्मरति पाणिनिः—आङ् मर्यादाऽभिविध्योः" इति । शास्त्रान्तरपर्यालोचनयाऽप्यत्राभिविधावाङ् । स्वसुतविवाहे स्वपितृभ्यो दद्यादित्युक्तं भवति । द्वितीयविवाहे प्रथमोद्वाहेन संस्कृतस्य संस्कार्यत्वाभावात् । आश्रमधर्मो युज्यते न चेत्पत्नीसहितः, पुत्रार्थ एवेति स्वपितृभ्यः पितेति पदत्रयस्यार्थः । ततः प्रकृते वचने उद्वाहे द्वितीये विवाह इत्येव रम-

णीयम् । पित्र्येष्ट्यां साकमेधमहापितृयज्ञे, सौमिके मखे तातीर्यसवनिकैः पुरोडाशखण्डैः स्वयजमानपितृभ्यो यत् क्रियते तत्रेति । स्पष्टमन्यत् । जीवतः पितुः इतीदं वचनं तेषामेव शाखिनां साग्निकानामेतदुक्तम्—

"न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः ।
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः" इति ।

ततो वराहसूत्रोपजीविनां जीवत्पितृकाणां साग्निकानामेव षट्स्वेतेषु श्राद्धेषु नान्येषामिति । यतस्तत्र गृह्यपरिशिष्टश्रवणात्, अतस्तेषामेवेति सिद्धम् । तथा अन्येषामपि जीवत्पितृकाणां नान्दीश्राद्धे नाधिकार इत्यभिधीयते, तथा च कात्यायनः—

"सपितुः पितृकृत्येषु त्वधिकारो न विद्यते ।
न जीमन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतेः" इति ।

अयमर्थः—पितृकृत्येषु श्राद्धेषु पितामहादिसम्बद्धेष्विति । सह पित्रा यो वर्तते तस्य सपितुः । अन्या च स्मृतिः—"पित्र्यं जीवत्पितुर्नोक्तम्" इति । होमोऽपि पाक्षिकः—"न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतेः" । अत एव सुमन्तुः—

"न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः ।
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ॥
पिता पितामहेऽप्येवं कुर्याज्जीवति साग्निकः ।
साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे" इति ।

तथा—

"कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनाम् ।

नामकर्मणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही" ॥

इत्यादि वचनजातस्य कथमस्मिन्पक्षेऽर्थवत्त्वम् ? सत्यं, वृद्धिश्राद्धं तावदित्थं मातृमातामहसम्बन्धिश्राद्धद्वयं कुर्यात् , पितृनान्दीमुखे नाधिकारो न जीवमन्तमतिक्रम्येत्याद्युक्तेः । तथा—

"नानिष्ट्वा तु पितॄन् श्राद्धे वैदिकन्तु समाचरेत्" इति ।

पितरि जीवति मातरि च जीवन्त्यामेके मातामहश्राद्धेषु देवपितृमातृमातामहेषु त्रिष्वपि जीवत्सु केवलं मातृमातर एव पूज्यन्ते । ततः कात्यायन–मतोक्तं पतिजीविनां जीवत्पितृकाणां साग्नीनां निरग्नीनामपि मैत्रायणीसूत्रातिक्रमो नास्तीति वृत्तम् ।

अथाश्वलायनानां जीवत्पितृकाणां नान्दीमुखनिर्णयः संक्षेपतोऽभिधीयते । तत्र तत्सूत्रेऽनेके पक्षाः । तत्र गणिगारि—सम्मतः पक्षः । येषां पितृपितामहानां ये प्रेताः तत्तदुद्देशेन पिण्डान्निपृणुयात् । जीवतान्तु प्रत्यक्षमर्चनम्, अस्य कर्मणः पित्रर्थत्वात् ।

अथ तौल्वलिसम्मतोऽयं पक्षः–यद्यपि जीवान्तर्हिताः, तथाऽपि पितृभ्यः प्रेतेभ्य एव दद्यादिति न जीवतामर्चा, निषिद्धत्वात् । तथोक्तं भविष्यति—

"प्रत्यक्षमर्चनं श्राद्धे निषिद्धं मनुरब्रवीत् ।
पिण्डनिर्वपणं वाऽपि महापातकसम्मितम्" इति ।

अथ गौतममतम् । पित्रादीनां त्रयाणां मध्ये जीवतोऽपि पिण्डदानमिति । एवं परस्परविरुद्धं पक्षत्रयम् । अत्रायं तात्त्विकः

सिद्धान्तः—यदवादि परेभ्यो दद्यादिति तदसम्बद्धं न कर्तव्यम् । यदवादि गणगारिणा पित्रर्थत्वात्कार्यमिति तदपि न, अनधिकारित्वात् । यदवादि तौल्वलिना जीवादन्तर्हितेभ्यो न निपृणुयादिति तन्न । उक्तहेतोः । यदवादि जीवद्भ्यो न निपृणुयादिति, तदपि न, उक्तहेतोः । ततश्च प्रत्यक्षार्चनमपि ततो न कार्यम् । अनधिकारिणा यदवादि जीवेभ्योऽपि निपृणुयादिति तदप्यसत् , प्रागुक्तादेव हेतोः। यदप्युक्तं जीवान्तर्हितेभ्यो निपृणुयादिति तदपि न, उक्तादेव हेतोः। अत्रायमनुष्ठानक्रमः—ये हि पितृत्रये भवन्ति तेभ्यः पिण्डान्दद्याज्जुहुयात् । एतेभ्य एव बर्हिषि निपृणुयादिति । यस्य तु सर्वे जीवन्तो भवन्ति तस्य सर्वहुतं हविर्भवेत् ।

अथ छन्दोगानां निर्णयः । तत्र कात्यायनः—

"सपितुः पितृकल्पेषु अधिकारो न विद्यते" इति ।

अथ मातामहश्राद्धमभिधीयते, तदपि जीवत्पितृककर्तृकमेव । इदं चाश्विनशुक्लप्रतिपदि शिष्टाचारादनुष्ठेयम् । शिष्टैराचर्यमाणानां सतां गोदोहनादिवत्फलसम्बन्धमप्राप्तं बोधयच्छास्त्रमर्थवदिति तस्यापि प्रमाणमभिधानात् । अत एवावश्यकम्—

"मातुः पितरमातरश्च त्रयो मातामहाः स्मृताः ।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः" इति

पुलस्त्यस्मरणात् । पितृवदित्यनेन पार्वणविध्यन्तवत्ता सूचिता । अत्र विशेषवचनानि पुराणेषूपलभ्यन्ते—

"कृत्वा तु पैतृकं श्राद्धं पितृप्रभृतिषु त्रिषु ।
कुर्यान्मातामहानां च तथैवानृण्यकारणात्" इति ।

व्यासः—

"पितॄन् पितामहांश्चैव द्विजः श्राद्धेन तर्पयेत् ।
आनृण्यं स्यात्पितॄणां च ब्रह्मलोकं च गच्छति"इति ।
आनृण्यग्रहणं नित्यतां ख्यापयति ।

तथा—

"पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत्" इति ।

इदं च वचनजातममावास्यादिविहितपितृश्राद्धविहितमातामहश्राद्धविषयं वेदितव्यम् , ततश्चामावास्यादौ संक्रान्त्यादौ गयादितीर्थादौ वा यत्र क्वचित्पैतृकं श्राद्धं तत्र मातामहश्राद्धं कार्यमित्यर्थः । इदं क्वचिदपवदति कातीयं वचः—

"कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः" इति ।

कर्षूसमन्वितं सपिण्डीकरणम् । श्राद्धषोडशग्रहणमेकोद्दिष्टोपलक्षणार्थम् । एवं च यन्मातामहश्राद्धं पितृश्राद्धे विहितं तत्रैव दोषानृण्ययोरभिधानात् तदेव सर्वं दौहित्रसाधारणम् । यच्च पुनर्धनहारिदौहित्रा ऽऽश्विने क्रियमाणं तत् जीवत्पितृकविषयमिति तत्वम् । स नवश्राद्धाद्यपि कुर्यात् । एवं यो हि यत आददीत स तस्मै दद्यादिति स्मरणात् । तथा च स्कन्दः—

"श्राद्धं मातामहानां तु अवश्यं धनहारिणा ।
दौहित्रेणार्थनिष्कृत्यै कर्तव्यं विधिवत्सदा" इति ।

अथैवं मन्यसे—

"कुर्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।
उभयोरर्थसम्बन्धात्कुर्यात्स उभयोरपि" ॥

इति वाक्याद्दौहित्रस्योभयसम्बन्धात् उभयोरप्यसौश्राद्धं कुर्यात्, इदमसत्, अनवगमेः। तथा हि नायमस्य वाक्यस्यार्थः। कस्तर्हि, अयमेवम्, द्विविधो हि पुत्रिकापुत्रः। एको हि मातामहेन सम्बद्धः, अपरः पुनः पितृमातामहाभ्यामिति, तत्र प्रथमो मातामहश्राद्धं नियमेन कुर्यात्, पितृश्राद्धमिच्छया । इतरस्तूभयोरपीति । अतो नात्रानियमः ।

"दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद् द्वौ पिण्डौ पित्रे मातामहाय च" इति (९।१३२)

मानवीयवचनं धनहारिदौहित्रस्यैव नवश्राद्धौर्ध्वदैहिककर्तव्यता नेतरस्येति प्रतिपादयति । तथा—

"मातामह्यं तु मात्रादि पैतृकं पितृपूर्वकम् ।
मातृतः पितृतो यस्मादधिकारोऽस्ति धर्मतः ॥
सगोत्रोवाऽसगोत्रो वा यो भवेद्विधवासुतः ।
पिण्डश्राद्धविधानं च क्षेत्रिणो प्राग्विनिर्वपेत् ॥
बीजिने तु ततः पश्चात्क्षेत्री जीवति चेत्पृथक् ।
बीजिने दद्युरादौ तु मृते पश्चात्प्रदीयते" इति ।

इति श्रीमल्लक्ष्मीनृसिंहचरणसरोरुहभ्रमरसकलभूमण्डलमण्डन समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारे मातामहश्राद्धाधिकारनिर्णयः ।

## अथापराह्णनिर्णयोऽभिधीयते ।

यद्यप्यमावास्यादौ श्राद्धं विहितं तथापि तदमावास्याया-मपराह्णे कर्तव्यमिति । "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन यजेते"ति श्रुतेः । स्मृतेश्च । तथा हि स्मरति शातातपः—

"दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।
अपराह्णे पितॄणां तु तत्र दानं प्रशस्यते" इति ।

अपराह्णश्च पञ्चधाविभक्तस्याह्नश्चतुर्थो भाग उच्यते—

"मुहूर्तत्रितयं प्रातस्तावानेव तु सङ्गवः ।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णोऽपि तादृशः ।।
सायाह्नस्त्रिमुहूर्तः स्यात्सर्वधर्मबहिष्कृतः" इति

व्यासस्मरणात् । न तु कदाचिद् द्वेधा विभक्तस्याह्नो द्वितीय-भागेऽपराह्णशब्दः प्रयुज्यते ।

"यथा चैव परः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते" इति ।।

तथा—

आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परम्" इति ।

अर्थस्तु आवर्तनादधः पूर्वाह्ण इति । तथा क्वचित्त्रिधा विभक्त-स्याह्नस्तृतीयो भागोऽपराह्ण इति। तथा—"पूर्वाह्णो वै देवानामपराह्णः पितॄणां मध्यन्दिनो मनुष्याणा"मिति । वाजसनेयिकेऽपि—"आ-दित्यस्त्वेव सर्वऋतवः स यदैवोदेत्यथ वसन्तः यदा सङ्गवोऽथ

ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदाऽपराह्णस्तदा शरद् यदाऽस्तमेत्यथ हेमन्त इति (श. ब्रा. २।२।२।८)। ततश्चाऽनेकधापराह्णशब्दप्रयोगे कथं निर्णय इति चेत्—सत्यं, भवत्येव सन्देहस्तथापि सर्वसम्मतपरमर्षिवेदप्रवक्तृसाक्षाद्धर्मोपदेष्टमनुप्रणीता द्वित्राः पक्षाः स्वीकार्याः ।

"शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणं न तु लङ्घयेत्" इति

मार्कण्डयेन द्वेधा विभक्तस्यान्हो द्वितीये भागे श्राद्धस्यविधेः । तथा "रौहिणं न तु लङ्घयेत्" इति चतुर्थादिभागादर्वागेव समाप्तिविधानाच्च रौहिणो हि नवमो मुहूर्तः । अपि च—

"भूतविद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतुपकालिकी"

इति । यदपि हारीतः श्राद्धाङ्गत्वेन कुतुपकालं विधत्ते, तदपि अनुपपन्नं न स्यात् । मनुना तेन कुतुपकालस्य श्राद्धाङ्गत्वमभ्यते । तत्र कुतुपकालग्रहणविधानात् इष्टार्थत्वोपयोगस्यैवोचित्यात् । तदुक्तं स्कन्दपुराणे—

"कुर्यत्र गोपतिर्गोभिः कात्स्न्र्येन तपति क्षणे ।
स कालः कुतपो नाम श्राद्धं तत्र प्रदीयते" इति ।

कुः पृथिवी । गोपतिः सूर्यः। अत्र केचिद्वदन्ति—ननु "एकोद्दिष्टं तु मध्यान्हे" इति बचनात् एकोद्दिष्टविषय एव हि कुतुपकालविधिः तन्न दर्शेऽपि कुतुपविधेरपास्तम् । अपरे—कुतुपकालविधा-

नस्य एकोद्दिष्टविषयतां मन्यन्ते। "एकोद्दिष्टन्तु मध्यान्ह" इति वचनात् । केचिन्नवश्राद्धविषयतां मन्यन्ते-"मध्यान्हो वै मनुष्याणामि"ति श्रुतेः। सपिण्डीकरणात्पूर्वमपितृरूपत्वाच्च । इदं चास्माभिः कालनिर्णयसारे विस्तरेण प्रपञ्चयिष्यते नेह विस्तरः । अन्यैरपि विस्तरेण प्रपञ्चितं तदपि मृग्यम् । न चैवं सर्वकुतुपापरान्हविध्योर्विकल्प इति मन्तव्यम् । कुतुपोत्तरार्धस्य अर्धापराह्णान्तर्भावात् । कुतुपो हि पञ्चदशमुहूर्त्तात्मकस्याष्टमो मुहूर्तः ।

"अन्हो मुहूर्ता विज्ञेया दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः" इति ।

ततश्च यदपराह्णे विहितं तदपराह्णान्तर्गतकुतुपे कर्तव्यमिति विधीयते निर्णय इति । तस्मान्न कश्चिद्विरोधः । अन्यथा किञ्चित्कुतपे कर्तव्यमिति कश्चिद्विधत्ते, परः पुनः "रौहिणं न तु लङ्घये"दिति रौहिणे । ततः परस्तु अपराह्णे कर्तव्यति स्पष्ट एव विरोधो भवेदिति । मत्स्यः—

"मध्यान्हे सर्वदा यस्मान्मदी भवति भास्करः ।
तस्मादन्तफलदस्तत्रारम्भो विशिष्यते" इति ।

तथा ह गौतमः—

"प्रारभ्य कुतुपं श्राद्धं कुर्यादा रौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं न तु लङ्घयेत्"इति ॥

इदं हि कुतुपे श्राद्धविधानमनग्निकविषयम्, साग्नेरनुष्ठित

पिण्डपितृयज्ञस्यैवैतदिति । तदाह कात्यायनः—

"पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यात्पश्चात्तु मासिकम्" इति ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डन मण्डनसमस्तयवनाधीश्वर श्री निजामसाह समस्तराज्य धुरन्धर श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारेकालनिरूपणम् ।

## अथ पात्रनिरूपणम् ।

देशे काले च पात्रे चेत्याद्यभिहितम् । तत्र देशः दक्षिणाप्रवणादिः, कालोऽपराह्णादिः । अथ पात्रम्–तथा च सत्यव्रतः—

"पितृप्रीतिनिमित्तानि द्रव्यं पात्रं सुतो विधिः ।
प्रधानं पात्रमेतेषां पात्रासिद्धौ पतेदधः" इति

पात्रस्याहवनीयस्थानीयत्वात्तत्सिद्धौ महान् यत्नः कर्तव्य इत्यवसीयते । तत्र पात्रशब्दव्युत्पत्तिः सत्यव्रतोक्ता—

"परे यत् हव्यकव्यानि स तारयति दैवतम् ।
तेनापात्रे प्रदानं यद् गच्छेत्तन्नैव दैवतम्" इति ।

तत्र पात्रप्रशंसा योगिनोक्ता—

"तपस्तप्त्वाऽसृजद् ब्रह्मा ब्राह्मणान्वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च" इति ॥

ब्रह्मा हिरण्यगर्भः ब्राह्मणानसृजतत् कल्पादौ तपस्तप्त्वा, किमर्थं वेदरक्षार्थं पितॄणां देवतानां तृप्त्यर्थं, तद्द्वारा धर्मसंरक्षणार्थं च । अतस्तेभ्यो दत्तमक्षयफलमिति भावः । तथा—

"सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्यो ह्यध्यात्मवित्तमाः" इति ॥

सर्वक्षत्रियाद्यपेक्षया उत्कृष्टत्वं जातिकर्माभ्यां श्रैष्ठ्यं, तत्र ब्राह्मणाः श्रेष्ठाः श्रुताध्ययनसम्पन्नाः, तेभ्योऽपि क्रियापराः विहितानुष्ठानशालिनः । तेभ्योऽप्यध्यात्मवित्तमाः । शमदमादितत्वेनात्मज्ञाननिरताः श्रेष्ठाः, ततश्च जातिविद्याद्यनुष्ठानतपसां समुच्चयः पात्रतासम्पत्तिहेतुः। प्रत्येकमपि हेतुतेति केचिन्मन्यन्ते । अपरे तु—वृत्तविद्यातपांसि पात्रतासम्पादकानीत्याह । तदाह—

"न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम्" इति ।

वृत्तमनुष्ठानम् । तत उक्तलक्षणे पात्र एव देयता, पात्रे गोभूतिलहिरण्यादि दातव्यमिति ।

"ना पात्रे विदुषा किंचिदात्मनः श्रेय इच्छता" ।

इति स्मरणात् ।

छागलेयोऽपि—

"सर्वलक्षणसंयुक्तैर्विद्याशीलगुणान्वितैः ।
पुरुषत्रयविख्यातैः सर्वं श्राद्धं प्रकल्पयेत्" इति ।

तथा पुराणे—

"जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः ॥
शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ।
नित्यं व्रती सत्यपरः स वै ब्राह्मण उच्यते" ।

मनुः—"न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।
तपः श्रुतं च योनिश्च ह्येतद् ब्राह्मण्यकारणम् ॥
सत्यं दानं दमो द्रोहमानृशंस्यं क्षमा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः" इति (३।१४६)।

आनृशंस्यमक्रूरत्वम् ।

हारीतः—"कुलीनाः श्रुतशीलवन्तो वृत्तस्थाः सत्यवादिनोऽव्यङ्गा ब्राह्मणाः कर्तव्या" इति । मनुस्तु—दैवे श्राद्धब्राह्मणस्यापरीक्षणीयत्वमुक्तवान् । तथा हि—

"न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि सम्प्राप्ते परीक्षेत प्रयत्नतः" इति ॥

श्राद्धे भोजयेदित्युपक्रम्य गौतमः—"हविष्षूचितान् ब्राह्मणान् भोजयेदिति श्राद्ध विवेके । हविःषु हव्येषु दैवेष्विति यावत् ।

मनुः—

"श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम्" इति (३।१२८) ॥

तथा—

"अश्रोत्रियाय दत्तं हि पितृभिर्नैति देवताः" इति ।

मत्स्यपुराणे—

"अर्थज्ञो वेदविन्मन्त्री ज्ञानवंशकुलान्वितः ।
पुराणवेत्ता सर्वज्ञः स्वाध्यायजपतत्परः ॥
शिवभक्तः पितृभक्तः सूर्यभक्तोऽथ वैष्णवः ।
ब्रह्मण्यो योगविच्छान्तो विजितात्माऽथ शीलवान्" इति ।

श्राद्धे नियोज्य इति शेषः ।

मनुः—

"गायत्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी" इति ।

व्यासः—

"चीर्णव्रता गुणैर्युक्ता भवेयुर्येच धार्मिकाः ।
सावित्रीज्ञाः क्रियावन्तस्ते राजन् केतनक्षमाः ॥
सावित्रीं तु जपेद्यस्तु द्विकालं भरतर्षभ ।
भैक्षवृत्तिः क्रियावांश्च स राजन् केतनक्षमः" इति ।

केतनमत्र निमन्त्रणमभिप्रेतम् । क्षमो योग्यः ।

मत्स्यः—

"गायत्रीजप्यनिरतं हव्यकव्ये नियोजयेत् ।
पापं तिष्ठति नो तस्मिन् अब्बिन्दुरिव पुष्करे" इति ।

पुष्करं पद्मपत्रम् ।

तथ ब्रह्मण्डपुराणे—

"शिखिभ्यो धातुरक्तेभ्यस्त्रिदण्डिभ्यश्च दापयेत्" इति।

ब्रह्मचारिणः शिखिनः, धातुरक्ताः धातुरक्तवस्त्रधारिणो वनस्थाः। तत्र पूर्वं यतिः श्रेष्ठः, ततो वानप्रस्थः, ततो ब्रह्मचारी, ततो गृहस्थ इति।

तदाह नारदः—

"यो वै यतीननादृत्य भोजयेदितरान् द्विजान्।
विदुषो वसतो ग्रामे कथं तद्याति राक्षसान्" इति।

ग्रामे स्वग्रामे वसतो यतीन् तेषामनादरेण य इतरान् द्विजान् भोजयेत् तदीयं कव्यं पित्रर्थं सङ्कल्पितमपि राक्षसानेव यातीति भावः।

तथा च ब्रह्माण्डपुराणे—

"अलाभेऽप्यातितिक्षूणां भोजयेद् ब्रह्मचारिणम्।
तदभावे ह्युदासीनं गृहस्थमपि भोजयेत्" इति।

तथा पितृगाथा श्रूयते—

"अपि स्यात्स कुले जन्तुर्भोजयेद्यस्तु योगिनम्।
विप्रश्राद्धं प्रयत्नेन तेन तृप्यामहे वयम्" इति।

यः प्रयत्नेन भोजयेदित्यादरार्थम्। तथा च पुराणम्—

"गृहस्थानां सहस्रेण वानप्रस्थशतेन च।
ब्रह्मचारिसहस्रेण यो योगी स विशिष्यते" इति।

तथा च पद्मपुराणे—

"साङ्गांस्तु चतुरो वेदान् अधीते सम्यगर्थवित्।

जन्मवान् कर्मसंशुद्धः स श्राद्धे प्रथमो मतः" इति ।

शातातपः—

"योगिनं भोजयेन्नित्यं दृष्टतत्त्वं मनीषिणाम् ।
तेषां तु दत्तमक्षय्यं भवतीति न संशयः" इति ।

ये तु योगिनो वृत्ते स्थितास्त एव भोज्या न स्वरूपेण ।

तदुक्तम्—

"ये तु वृत्तस्थिता नित्यं ज्ञानिनो ध्यानिनश्च ये" इति ।

अनेन योगशास्त्रपाठमात्ररतस्य पञ्चमहापातकयुक्तस्याभोज्यत्वमुक्तम् । वस्तुज्ञाननिष्ठस्य ध्याननिष्ठस्य मद्यपानादौ प्रवृत्त्यभावादिति ततो ज्ञानध्यानयुक्तो भोज्यः । आत्मादिस्वरूपपरिस्थितिज्ञानं विजातीयबुद्धिहान्यात्मसाक्षात्कारे—छागलेयः—

"सर्वारम्भनिवृत्तानां यतीनां दत्तमक्षयम् ।
सततं योगयुक्तानां वीतरागतपस्विनाम्" इति ।

यमः—

"यतये वीतरागाय दत्तमन्नं सुपूजितम् ।
न क्षीयते श्रद्धया ऽपि कल्पकोटिशतैरपि ॥
योगिनं समतिक्रम्य गृहस्थं यदि भोजयेत् ।
न तत्फलमवाप्नोति स्वर्गस्थानपि पातयेत् ॥
योगिनं तु परित्यज्य पूजयन्ति परस्पम् ।
दाता भोक्ता च नरकं गच्छन्ति सह बान्धवैः" इति ।

अत्र सततयोगयुक्तादि यतिविशेषणान्येकदण्डविषय एव समीचीनानि ।

तथा—

"नास्तिको वा विकर्मा वा सङ्कीर्णस्तस्करोऽपि वा ।
नान्यत्तु कारणं दाने योगिष्वाह प्रजापतिः ॥
पितरस्तस्य तुष्यन्ति सुवृष्टेनेव कर्षकाः ।
पुत्रो वाऽप्यथवा पौत्रो ध्यानिनं यस्तु भोजयेत् ॥
यतिस्तु सर्वविप्राणां सर्वेषामग्रभुग्भवेत्" इति ।
केचिद् गुणात्तवरा ब्रह्मपुराणे दर्शिताः—
"चतुर्दशानां विद्यानामेकस्या अपि पारगः ।
यथावद्वर्तमानश्च सर्वे ते पङ्क्तिपावनाः ॥
ये तु भाष्यविदः केचित् ये च व्याकरणे रताः ।
अधीयानाः पुराणं च धर्मशास्त्रमथापि वा ॥
अक्रोधनाः क्षान्तिपरास्तान् श्राद्धेषु निमन्त्रयेत्" इति ।

तथा—

बार्हस्पत्यं नीतिशास्त्रं शब्दविद्यां च वेत्ति यः ।
इतिहासपुराणैश्च यः पवित्रीकृतः सदा ॥
अकृत्यमपि कुर्वाणः स पवित्रशतादूरः ।
बहुनाऽत्र किमुक्तेन इतिहासपुराणवित् ॥
अथर्वशिरसोऽध्येता तावुभौ पितृभिः पुरा ।
तपः कृत्वा तु योगात्तु प्रार्थितौ पितृकर्मणि" इति ॥

वृद्धशातातपः—

"ज्ञानी यस्य गृहेऽश्नाति उदकं वा पिबेद्यदि ।
कृतं तेन महत् कृत्यं तारितं च कुलत्रयम् ॥

योगिनं समतिक्रम्य गृहस्थं यदि भोजयेत्।
तत्तत्कुलमवाप्नोति स्वर्गस्थमपि पातयेत्॥
योगिनं तु व्यतिक्रम्य पूजयन्ति व्यतिक्रमम्।
भोक्तारस्तु सदाचारा नरके स्युः सबान्धवाः" इति।

आपस्तम्बः—

"अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः।
तान् निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान्॥
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः॥
त्रिणाचिकेतः पञ्चाग्निः त्रिसुपर्णः षडङ्गवित्।
ब्रह्मदेयानुसन्तानो ज्जेष्ठसामग एव च॥
वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः।
शतायुश्चैव विज्ञेयाः ब्राह्मणाः पङ्क्तिपावनाः" इति।

ब्रह्मदेयानुसन्तानः ब्राह्मविवाहोढा पुत्रः। सहस्रद इति गवां सुवर्णस्य चेति ज्ञेयम्।

अत्र पैठीनासिः—

"अथातः पङ्क्तिपावना भवन्ति त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णश्चीर्ण-व्रतः छन्दोगो ज्येष्ठसामगः ब्रह्मदेयाऽनुसन्तानः सहस्रदो वेदाध्यायी चतुर्वेदः षडङ्गवित् अथर्वशिरसोऽध्यायी पञ्चाग्निर्वेदजापो चेति, तेषामेकैकः पुनाति पङ्क्तिनियुक्तो मूर्द्धनि सहस्रैरप्युपहतामि"ति।

यमः—

"ये सोमपा विरजसो धर्मज्ञाः शान्तबुद्धयः।

व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः ॥
पञ्चाग्निरप्यधीयानो यजुर्वेदविदेव च ।
बह्वृचश्च त्रिसौपर्णः त्रिमधुर्वाऽथ यो भवेत् ॥
त्रिणाचिकेतो विरजाः छन्दोगो ज्येष्ठसामगः ।
अथर्वशिरसोऽध्येता सर्वे ते पङ्क्तिपावनाः ॥

शङ्खः—

"ब्रह्मदेयानुन्तानो ब्रह्मदेयाप्रदायकः ।
ब्रह्मदेयापतिश्चैव ब्राह्मणाः पङ्क्तिपावनाः ॥
यजुषां पारगो यश्च साम्नां यश्चापि पारगः ।
अथर्वशिरसोऽध्येता ब्राह्मणाः पङ्क्तिपावनाः ॥
चान्द्रायणव्रतस्थो यः सत्यवादी पुराणवित् ।
निवासः सर्वविद्यासु शान्तो विगलकल्मषः ॥
गुरुवेदाग्निपूजासु शान्तो विगतकल्मषः ।
नित्यं योगपरः सिद्धः समलोष्टाश्मकाञ्चनः ॥
ध्यानशीलो यतिर्विद्वान् ब्राह्मणाः पङ्क्तिपावनाः" इति ॥

यस्य स्थितिरविच्छिन्नवेदा, अविदितायोनिसङ्करत्वं पारमार्थ्यं चेति हारीतः ।

मनुना कल्पान्तरक्तम्—

कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्" (३।१४४) इति।

अभिरूपमपि द्विद्वांसमपीति यावत् । काममित्युक्तेरनुकल्पता प्रतीयते। अयमनुकल्पः पूर्वोक्तकल्पालाभे द्रष्टव्यः ।

"न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः ।
नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद् द्विजम् ॥
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविष्षु च"

इति निन्दार्थवादादपि नायं पक्षः साधीयानिति । एतादृश-विप्रेषु सदाचारवैकल्पदर्शनेऽपि निन्दा न कार्या ।

तदुक्तम्—

"युगे युगेषु हि धर्मास्तेषु तेषु च येद्विजाः ।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः" इति ।

तथा भविष्येऽपि—

"वैश्वदेवेन ये हीना आतिथ्येन च वर्जिताः ।
ते सर्वे वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः" इति ॥

तस्मादमन्त्रं परित्यजेत् , मन्त्रज्ञं भोजयेदिति युक्तम् ।

"एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि" ॥

इति स्मरणात् ( मनु० ३।१२९ ) ।

"सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते ।
एकस्तान्मन्त्रवत्प्रीतः सर्वानर्हति धर्मतः" इति ।

अनृचामनृग्विदामवेदार्थविदामुपलक्षणामृचः, यतो हि ते प्राप्ता एव न सन्ति "श्रोत्रियाय" एवेति नियमात् (मनु० १२८) । छान्दसत्वादेकवचनम् ।

देवलः—

"त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः ।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते" इति ।

त्रिशुक्लपदश्च तेनैव व्याख्यातम्—

"एवमन्वयशीलाभ्यां वृत्तेन च समुच्छ्रिताः ।
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते दैवतैरपि" इति ।

सतो जन्मावाप्तिरन्वय इत्यभिधीयते, विनयादिसम्पच्छीलं, सतां वृत्तं शौचाचाराद्यात्मकम् । एतैस्त्रिभिः सुगोपितैरन्विताः त्रिशुक्ला अभिधीयन्ते । ते च दुर्लभाः, अत उक्तं दैवतैरपि पूज्यन्ते इति ।

मनुः—

"अग्र्याः सर्वेषु वेदेष्वि"ति ।

अयमर्थः—सर्वेषु वेदेषु ऋग्यजुःसामसु संशयानुपपत्ति विधातुं क्षमा इति अग्र्याः । न केवलं वेदेषु अपि तु प्रवचनेषु अपि प्रोच्यन्ते व्याख्ययन्ते यैर्वेदास्तानि प्रवचनान्यमङ्गानि निरुक्तव्याकरणादीनि, तेष्वग्र्या इति । न केवलमग्र्याः, अपि तु श्रोत्रियान्वयजाश्चेद् भवन्ति ते पङ्क्तिपावना इति ।

तथा योगियाज्ञवल्क्यः —

"अग्र्याः सर्वेषु देवेषु श्रोत्रियो ब्रह्मविद्युवा ।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः" इति (१।११९) ॥

अयमर्थः—सर्वेषु वेदेषु ऋग्वेदादिषु अनन्यमनस्कतयाऽस्खलिताध्ययनक्षमाः अग्र्याः, श्रुताध्ययनसम्पन्नः श्रोत्रियः, ब्रह्म परमात्मरूपं वेत्तीति ब्रह्मवित् , युवा मध्यमवयस्कः, मन्त्रब्राह्म-

णात्मवेदार्थमृग्यजुषोरेकदेशं तद्व्रतं च वेत्तीति वेदार्थवित्, ज्येष्ठसाम सामविशेषः तद्व्रतं तद्व्रताचरणेन यस्तदधीते स ज्येष्ठसामा, त्रिमधुः ऋग्वेदैकदेशः, त्रिसुपर्णमृग्यजुषोरेकदेशं तद्व्रतं च, तदादेशेन यस्तदधीते स त्रिसुपर्णकः, ते ब्राह्मणाः श्राद्धसम्पद इति ।

तथाऽन्येऽपि ब्राह्मणाः—

"कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः" इति ।

अस्यार्थः— कर्मनिष्ठा विहितानुष्ठानपराः, तपोनिष्ठाः तपःशीलाः, सभ्यावसथ्यौ त्रेताग्नयश्च यस्य सन्ति स पञ्चाग्निः ।

"ज्ञाननिष्ठा द्विजाः केचिद्रूपनिष्ठास्तथा परे ।
तपःस्वाध्यायनिष्ठाश्च कर्मनिष्ठास्तथैव च ॥
ज्ञानोत्कृष्टेषु कव्यानि प्रदेयानि प्रयत्नतः ।
न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य सङ्ग्रहः ॥
नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद् द्विजम्" इति ।

तस्मादरिमित्रव्यतिरिक्तं पूर्वोक्तलक्षणलक्षितं ब्राह्मणं श्राद्धे नियोजयेदिति । आपस्तम्बः—ब्राह्मणान् भोजयेत् ब्रह्मविदो योनि–गोत्र–मन्त्रा–ऽन्तेवास्यसम्बद्धानिति । अयमर्थः—"योनिसम्बद्धा मातुलादयः, गोत्रसम्बद्धाः सपिण्डादयः, मन्त्रसम्बद्धा वेदाध्यापकादयः, अन्तेवासिसम्बद्धाः शिल्पशास्त्रोपाध्यायाः । एवंविधसम्बन्धव्यतिरिक्तान् गृहस्थप्रमुखान् ब्राह्मणान् भोजयेत् ।

तथा पुलस्त्यः—

"साङ्गांस्तु चतुरो वेदान् अधीते संस्कृतोऽर्थवित् ।

जन्मवाक्कर्मसंयुक्तः स श्राद्धे प्रथमो मतः ॥

तादृशादयुताच्छ्रेयान् एको योगसमाश्रयः'' इति ।

मनुः—

''एषामन्यतमो यस्तु भुञ्जीत श्राद्धमर्चितः ।

पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी ॥

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।

अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ।

मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।

दौहित्रं विट्पतिं बन्धून् ऋत्विजं चापि भोजयेत्'' इति ।

अत्र हि एवं व्यवस्था—एको हि प्रथमो मुख्यः कल्पः, अपरस्त्वनुकल्पः, तत्र पूर्वाभिहितवेदपारगादिर्विप्रवर्गः प्रथमः श्रेष्ठः कल्पः, द्वितीयस्तु प्रथमादधमः कल्पः स एवानुकल्प इत्युच्यते । तदुक्तममरकोशे जिनेन्द्रेण—

''मुख्यः स्यात्प्रथमः कल्पस्त्वनु कल्पस्तु मध्यमः'' इति ।

मातामहं मातुलं चेत्यादि वक्ष्यमाणः प्रथमकल्पाभावे सर्वकालं महद्भिरनुष्ठीयते । गुरुरत्र विद्योपदेष्टा न पिता । विट्पतिर्जामाता अतिथिर्वा, तदाह देवस्वामी—अतिथिरित्यन्ये वदन्तीति । यत्र प्रथमकल्पस्य सम्भवस्तत्राननुष्ठानं द्वितीयस्येति ।

तदाह—

प्रभुः प्रथमकल्पस्य योऽनुकल्पे तु वर्तते ।

न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्'' इति ।

प्रभुः सम्पादने शक्तः, सम्पराय उत्तरः कालः, तथा च को-

षः—"युद्धायत्योः संपराय" इति। ततश्च पूर्वोक्तकल्पाभावे भागिनेयादयो ग्राह्याः। तदुक्तं मिताक्षरायाम्—एते स्वस्रीयादयः पूर्वोक्तश्रोत्रियाद्यभावे वेदितव्या इति। विष्णुपुराणेऽप्यनुकल्प उक्तः—

"पितृव्यगुरुदौहित्रान् ऋत्विक्स्वस्रियमातुलान्।
पूजयेद्धव्यकव्येन" इति।

वायुपुराणे—

"वृद्धानतिथिबान्धवान्" इति। "स्वस्रियो भागिनेयः स्यादि"ति। पितृष्वसृजं च हव्येन पूजयेत्, इतरांश्च गुरुदौहित्रादीन् कव्येनेति।

ननु—

"न स गोत्रे हविर्दद्यान्न्यथा कन्या तथा हविः" इत्यादिभिः सगोत्रे श्राद्धनिषेधात् कथं पितृव्योपादानम्। सत्यमेवैतद ज्ञानम्, न त्वभिज्ञानाम्। तथा हि—षड्भ्यः पुरुषेभ्योऽर्वागयं निषेधो न सार्वत्रिकः।

"षड्भ्यस्तु पुरुषेभ्योऽर्वागश्राद्धेयास्तु गोत्रिणः।
षड्भ्यस्तु परतो भोज्याः श्राद्धे स्युर्गोत्रजा अपि" इति

स्मरणात्। अनेनैवाभिप्रायेण तरप्प्रत्ययरहितत्वेन गुणवन्मात्रत्वमादाय भोज्या गुणवन्त इति गौतमोऽपि स्मृतवान्। ततश्च षट्पुरुषोत्पन्नसपिण्डानां पित्राद्युद्देशेन भोजनीयत्वमसम्मतम्, नतु वैश्वदेवोद्देशेनापि।

तथा—

"पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः।

न परस्परमर्घ्याः स्युर्न श्राद्धे ऋत्विजस्तथा ॥
ऋत्विक् पुत्रादयोऽप्येते सकुल्या ब्राह्मणा द्विजाः ।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः"

इति हव्येन पूजनं तेनैव विहितम् । गुणवांश्चेद् ब्राह्मणो न लभ्यते तदा सोदर्योऽपि भोजयितव्यः । तथा चापस्तम्बः—"एवं च गुणवदवलाभे सोदर्योऽपि भोजयितव्य" इति । तस्याप्ययमेवाभिप्रायो लक्ष्यते, वैश्वदैविकब्राह्मणस्थान एवेति, अन्यथा वाक्यानर्थक्यापत्तेः

विष्णुपुराणे—

"पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।
मातृपक्षस्य पिण्डेन सम्बन्धो यो जलेन वा ॥
कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप ।
सपिण्डान्तर्गते वाऽपि कार्याः प्रेतस्य याः क्रियाः" इति ।

किञ्च गुणवत्तरत्वात् उक्तहेतुना षट्पुरुषाधिकसगोत्राणामश्राद्धार्हत्वाङ्गीक्रियमाणे षड्भ्यस्तु परतो भोज्या इति षट्पुरुषोर्ध्वपुरुषोत्पन्नसगोत्राणां गुणवत्तरत्वाभावेऽपि श्राद्धेयतार्था प्राप्नोति, सत्यं, सगोत्रा ये श्राद्धेयास्ते गुणवत्तरत्वेन वा समन्विताः श्राद्धे ग्राह्याः, ये तु सगोत्रा अश्राद्धेयाः, ते गुणवत्त्वेन विहीना अपि इत्यतितरां विरुद्धं स्यात् । अतः षट्पुरुषेभ्योऽर्वाक् सगोत्राः पैतृकश्राद्धे नार्हाः, वैश्वदेविके त्वर्हाः, ततः परे तु पैतृकेऽप्यर्हा इत्यत्र वाक्यार्थः ।

इदं च सर्वमपि गोत्रापेक्षयाऽधिकगुणानां समगुणानां वा स-

गोत्राणामभावे द्रष्टव्यम् । तथा चापस्तम्बः—"भोजयेद् ब्राह्मणान् योनिगोत्रादेवासम्बद्धान् गुणहान्या तु परेषां समुदेतः सोदर्योऽपि भोजयितव्य" इति ।

अत्र योनिर्गोत्रमिति भावप्रत्ययोऽन्तर्भूतः प्रत्येतव्यः यथा—"द्व्येकयोर्द्विवचनैकवचने" इति पाणिनीयस्मरणे द्वित्वैकत्वयोरिति,

तस्मात्सगोत्रा अप्यामन्त्रणीयाः ।

"व्रतस्थमपि दौहित्रं श्राद्धे यत्ने न भोजयेत्" इति ।

व्रतमात्रस्थमध्ययनरहितमिति ।

"तस्मान्नातिक्रमेत्प्राज्ञो ब्राह्मणान् प्रातिवेशिकान् ।
सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा ॥
भागिनेयं विशेषेण तथा बन्धुं खगाधिप ।
नातिक्रमेन्नरस्त्वेतान् अमूर्खानपि गोपते ॥
अतिक्रम्य महारौद्रं रौवं नरकं व्रजेत् ।

अमूर्खानपीत्यपि शब्दः पादपूरणार्थः ।

"सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।
भोजने चैव दाने च हन्यात् त्रिपुरुषं कुलम्" इति ॥

यस्तु सन्निकृष्टोऽनधीयानस्तदतिक्रमेऽपि न दोषः। तदुक्तं तत्रैव—

"यस्य त्वेकगृहे मूर्खो दूरस्थश्च गुणान्वितः ।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः" इति ।

व्यतिक्रमो नास्ति व्यतिक्रमदोषो नास्तीत्यर्थः ।

मूर्खग्रहणं निर्गुणस्याप्युपलक्षणार्थम् ।

# अथ वर्ज्या निरूप्यन्ते ।

तत्र—

"ये स्तेनाः पतिताः क्लीबा ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्रान् अनर्हान्मनुरब्रवीत् ॥
जटिलं वाऽनधीयानं दुर्बलं कितवं तथा ।
याजयन्ति च ये पूगान् तांश्च श्राद्धे न भोजयेत् ॥
चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥
भृतकाध्यापको यश्च भृतकाध्यापितस्तथा ।
शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥
अकारणात् परित्यक्ता मातापित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी वन्दी च तैलिकः कूटकारकः ॥
पित्रा विवदमानश्च कितवो मद्यपस्तथा ।
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ।
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ॥
हस्ति-गोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
स्रोतसां भेदको यश्च तेषां चावरणे रतः ॥

हिंस्रो वृषलवृत्तिश्च गणानां चैव याजकः ।
महारोगयुतश्चैव कृषिजीवी तथैव च" इति ।

महारोगा देवलेनोक्ताः—

"उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो भगन्दरो महोदरोऽश्मरी चेत्यष्टौ पापरोगा" इति ।

विष्णुः—तस्कर–कितवाजपाल–गण–गणिका शूद्रप्रेष्या ऽगम्यागामि–परिवेत्तृ–परिवित्ति–पर्याहित–पर्याधातृ–पौनर्भवान्ध–बधिर–चारण–क्लीबावकीर्णि–वार्धुषिक–कूटसाक्षि–नास्तिक–वृषलीपति–त्यक्तात्मोत्सृष्टाग्निसोमविक्रय्यविक्रेयविक्रेतृ–पौंस्निक–कथक–कुण्डाशि-कुण्डगोलक–यन्त्रकार-काण्डपृष्ठ-दुश्चर्म-चण्ड–विद्धशिश्न देवलक-षण्ढाऽऽरूढपतित-प्रायोत्थित-कुनखि-किलाशि–श्यावदन्त–वणिक्–शिल्पवादित्र नृत्यगीततालोपजीवि–मूल्य सांवत्सरिक–माहिषिक–विविधरागवशाद् वृथाकषायधारि–वृथाजटिल–द्व्यङ्गुलातीतकर्ण–विद्धकर्ण–हन्तृ–आश्रमबाह्य हीनातिरिक्ताङ्ग–वृथालिङ्गधारि–कन्यादूष्यभिशस्त–मित्रध्रुक्–पिशुनः सोमविक्रयी–परिविन्दक–मातापितृगुरुत्यागी–कुण्डाशी वृषलकर्मा–दुष्टो निन्दितः कुनखी–नास्तिकवृत्तिर्गृहोपपतिकोऽगारदाही गरदः पितृविवदमानो मित्रद्रोही–द्यूतवृत्तिर्दिधिषूपतिर्भ्रामरी–गण्डमाली पिशुनोन्मत्त गृहसंविशक–दूत–वृक्षारोपक–श्वक्रीडन् श्येनजीविन्-गणयाजक-कृषिजीवि-शिल्पजीवि-खल्वाटकः कपिलकेशः कपिलाक्ष इत्यादयः श्राद्धादौ वर्ज्या इति ।

ननु गुणवतां विधानेन परिशेषादितरेषां प्रत्याख्यानस्य कर्तुं

शक्यत्वात् किमर्थं वर्ज्यानां परिगणना, सत्यं, उक्तलक्षणलक्षिताभावे यस्य कस्यापि प्राप्तौ प्रतिषिद्धवर्जं ग्राह्या इत्येतदर्थं पार्थक्येन वर्ज्यानामुपसङ्ग्रहणमिति न दोषः। तथा च ब्रह्माण्डे—

"श्राद्धार्हब्राह्मणायोगे निषिद्धा न कथञ्चन।
निमन्त्रणीयाः श्राद्धेषु सम्यक्फलमभीप्सते"ति।

एते ब्राह्मणाः प्रागेव सम्यक्परीक्ष्य पूर्वेद्युर्निमन्त्रणीयाः। "श्राद्धमाचरिष्ये इति पूर्वेद्युर्निमन्त्रये"दिति हारीतस्मरणात्। असम्भवे परेद्युर्वा निमन्त्रयीत। तथोक्तं कूर्मेण—

"श्वो भविष्यति मे श्राद्धं श्राद्धकर्मण्युपस्थिते।
निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान्यथोदितान्" इति।

निमन्त्रणरीतिः प्रचेतसोक्ता—

"कृतापसव्यः पूर्वेद्युः पितॄन् पूर्वं निमन्त्रयेत्।
भवद्भिः पितृकार्यं नः सम्पाद्यं च प्रसीदत॥
सव्येन वैश्वदेवार्थं प्रणिपत्य निमन्त्रयेत्" इति।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-
समस्तयवनाधीश्वर श्रीनिजामशाह समस्तसाम्राज्यधुरन्धर-
श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंह-
प्रसादे श्राद्धसारे पात्रनिरूपणम्।

## अथ श्राद्धपाकनिर्णयः।

तदर्थं द्रव्यनिर्णयः प्रस्तूयते। तत्र देवलः—

"तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः।

आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः" इति ।

तदाहोशनाः—"गोमयोदकैर्भूमिभाजनभाण्डशौचं कुर्यादि"ति। गोमयलेपेन महानसभूमिशुद्धिं कुर्यात् । उदकैरभ्युक्षणाहरणप्रकरणोक्तप्रकारेणाहृतैः भाजनानां गोधूमपिष्टादिप्रक्षेपणार्थानां तण्डुलादिपाकार्थानां भाण्डानां च शुद्धिं कुर्यादिति । महानसभूश्च संस्कार्या ।

"तिलांश्च विकिरेत् तत्र सर्वतो बन्धयेदजान् ।
असुरोपहतं सर्वं तिलैः शुद्ध्यत्यजेन च" इति ।
"ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् ।
चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेत्" इति ।

अनेकव्यञ्जनभक्ष्योपेतं, व्यज्यतेऽनेनान्नस्य रस इति व्यञ्जनमत्र सूपशाकादिकं, यस्य सारांश एव सेव्यो न द्रव्यांशः, यथा इक्षुकाण्डान्, तच्चोष्यम् । पानोपयोगिचिन्ताफलरसादौ गुडादिमधुररसद्रव्यसम्मेलनेन क्रियमाणं पेयम् । च शब्दात्सुसमृद्धं विकृतभूतमन्नादिकं प्रकृतिभूतविद्याद्यापेक्षम् ।

अत्र यदपेक्षते तदवोचत् प्रचेताः—

"कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्नवशालयः ।
महायवा व्रीहियवास्तथैव च मधूलिकाः ॥
कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि" इति ।

तथाच मनुः—

"तिलैर्व्रीहियवैर्माषैरद्भिर्मूलैः फलेन वा ।
दत्तेन मासं तृप्यन्ति विधिवत्पितरो नृणाम्"(३।२६८)इति ।

व्रीहियवाश्च यवविशेषाः । मधूलिका धान्यविशेषः । कृष्णा-स्थलजा व्रीहयः ।

"द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥
षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै ।
अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥
दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु ॥
संवत्सरन्तु गव्येन पयसा पायसेन च ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्काः खड्गो लोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः" इति ।

हारिणं गौरमृगमांसम् । औरभ्रं=मेषमांसम् । शाकुनं भोज्य पक्षिमांसम्,पृषतश्चित्रमृगस्तस्य मांसं पार्षतम्। एणः=कृष्णमृगः, तस्य मांसमैणम् । रुरोर्मांसं रौरवम् । बहुविशेषाण्डो मृगविशेषो रुरुः । गण्डकः खड्गः । वार्ध्रीणसस्य विष्णुधर्मोत्तरे लक्षणमुक्तम् । तथा हि—

"त्रिःपिबन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्ध्रीणसन्तु तं प्राहुर्याज्ञिकाः पितृकर्मसु" इति ।

केचिदन्यथा वदन्ति—

"कृष्णग्रीवो रक्तशिराः श्वेतपुच्छो विहङ्गमः ।
स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः" इति ।

अथवैवम्—

"त्रिःपिबन्त्विद्रियक्षीणं यूथस्याग्रचरं तथा ।
रक्तं वर्णेन राजेन्द्र छागं वाध्रीणसं विदुः" इति ।

तथा मार्कण्डेयः—

"यवव्रीहिसगोधूमास्तिलमुद्गाः ससर्षपाः ।
प्रियङ्गवः कोविदारा निष्पावाश्चात्र शोभनाः" इति ।

अत्र गोधूमास्त्वावश्यकाः—

"अगोधूमन्तु यच्छ्राद्धं कृतमप्यकृतं भवेत्"

इत्यत्रिस्मरणात् ।

वापुपुराणे—

"बिल्वामलकमृद्वीकं पनसाम्रातदाडिमम् ।
पीयुः कालेयकाक्षोटखर्जूराणां फलानि च ।।
कसेरुः कोविदारश्च नालकन्दस्तथा विसम् ।
कालेयं कालशाकञ्च सुनिषण्णं सुवर्चला ।।
कट्फलं कौङ्कणी द्राक्षा लकुचं मोचमेव च ।
कर्कन्धुश्च कचोरश्च तिन्दुकं मधुसाह्वयम् ।।
वैकङ्कतं नारिकेलं शृङ्गाटकपरूसकम् ।
पिप्पली मरिचं चैव पटोलं बृहतीफलम् ।।
सुगन्धि शतकन्दं च कलायाः सर्व एव च ।
एवमादीनि चान्यानि स्वादूनि मधुराणि च ।।
नागरं चात्र वै देयं दीर्घमूलकमेव चे"ति ।

मृद्वीका द्राक्षा "मृद्वीका गोस्तनीद्राक्षे"त्यमरकोशः[ २.५ ] ।

आम्रातकमाम्रवृक्षसदृशः पीतनाख्यो वृक्षः । "पीतन-कपीतनौ । आम्रातक" इति तत्रैव ( अ. २–४–२७ ) ।

अक्षोटः गिरिसम्भवः, पीयुः कराहजलकन्दो भद्रमुस्ताख्यः।कालेयको दारुहरिद्रा,सुनिषण्णं वितुन्नाख्यं शाकम् । "वितुन्नं सुनिषण्णक"मिति शाकप्रक्रमेऽमरकोश उक्तवान् । कट्फलो लघु श्रीपर्णाख्यो वृक्षः। श्रीपर्णिका कुमुदिकेति । कौङ्कणी कोङ्कणदेश प्रभवा द्राक्षा, लकुचो जंबीरफलतुल्यः सर्वफलवान् गुल्मविशेषः । मोचं कदलीफलं,कर्कन्धुर्बदरी,तिन्दुकः शितिसारकाख्यो वृक्षः ।

"तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके" इत्यमरकोशः । [ २. ५ ]

शृङ्गाटकं जलजं त्रिकण्टकं, बृहती कण्टकारिका ।

"निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिके"त्यमरः । [२।५] तस्याः फलं बृहतीफलम् । बिल्वामलकादीनि प्रसिद्धानि ।

तथा ब्रह्माण्डपुराणे—

प्रसाधिका प्रियङ्गुश्च ग्राह्याः स्युः श्राद्धकर्मणि ।
एतान्यपि समानानि श्यामाकानां गुणैः स्तुतैः ।।
कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्नवशालयः ।
महायवा व्रीहियवास्तथैव च मधूलिकाः ।।
कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि ।
राजमाषास्तथैवान्ये विवर्ज्याः स्युः प्रयत्नतः ।।
मसूराः शतपुष्पाश्च कुसुम्भं श्रीनिकेतनम् ।
वर्ज्याश्चातियवा नित्यं तथा दुर्लभका यवाः ।।

तथा ब्रह्माण्डे—

“सैन्धवं लवणं चैव तथा मानससम्भवम् ।
पवित्रे परमे ह्येते प्रत्यक्षमपि नित्यशः” इति ।

तथा आदित्यपुराणे—

“मधुकं रामठं चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथे”ति ॥

अत्र मार्कण्डेयः—

“गोधूमैरिक्षुभिर्मुद्गैः सतीनैः कनकैरपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ॥
विदार्यैस्तु परूषैस्तु विसैः शृङ्गाटकैस्तथा ।
कम्बुकैश्च तथा कन्दैः कर्कन्धूबदरैरपि ॥
पालेवतैरारुकैश्च अक्षोटैः पनसैस्तथा ।
काकोल्या क्षीरकाकोल्या तथा पिण्डालुकैः शुभैः ॥
लाजाभिश्च सधानाभिस्त्रपुसैश्चारु-चिर्भटैः ।
सर्षपाराजशाकाभ्यामिङ्गुदै राजजम्बुभिः ॥
प्रियालामलकैर्मुख्यैः फल्गुभिश्च विलम्बकैः ।
वंशाङ्कुरैस्तालकन्दैश्चुक्रिकाक्षीरिकाधवैः ॥
मोचैः समोचैर्लकुचैः तथा वै बीजपूरकैः ।
मुञ्जातकैः पद्मफलैः भक्ष्यभोज्यैः सुसंस्कृतैः ॥
राजखाण्डवचोष्यैश्च त्रिजातकसमन्विन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणामि”ति ।

विदारी कृष्णवर्णा भूकुष्माण्डफलम् । कम्बुकः कर्शराख्यशाकं

कन्दः। सूरणः कन्दः, कर्कन्धूः तिक्तकर्कटी, दीर्घच्छान्दसः। राजशाकं कृष्णसर्षपः, इङ्गुदस्तापसतरुः, फल्गूनि क्षुद्रामलकानि, क्षीरिका फलाध्यक्षं, राजखाण्डवः पानविशेषः, त्रिजातकं लवङ्गैलातेजपत्राणि ।

कात्यायनः—

"अथ तृप्तिर्ग्राम्याभिरोषधीभि र्मासन्तृप्तिरारण्याभिर्वा तदलाभे मूलफलैरद्भिर्वा सहान्नेनोत्तरास्तर्पयन्ति गोऽउस्रमेषा आलब्धव्याः शेषानि क्रीत्वा लब्ध्वा वा स्वयं मृतानां वाऽऽहृत्य" इति ।

देवलः—"तृप्यन्ति मत्स्यैर्द्वौमासौ त्रीन्मासान् रुरुभिर्मृगैः ।
शाकुनैश्चतुरो मासान् पञ्च तृप्यन्ति पार्षतैः ॥
शशैः षाण्मासिकी तृप्तिः कूर्मैः स्यात्सप्तमासिकी ।
अष्टौ मासान् वराहेण नव तृप्यन्त्यजेन च ॥
दश माहिषमांसेन तृप्यन्त्येकादशाविकैः" ।

तथा—"चतुरः शाकुनैः, पञ्च रौरवेण, षडैणेन, सप्त कार्ष्णेन, अष्टौ वाराहेण; नव मेषमांसेन, दश माहिषेण, एकादश पार्षतेतेन" इति ।

तथा—अथाक्षया तृप्तिः बालच्छागो मधु महाशल्को-वर्षासु मघासु च गजच्छायायाञ्च ताम्रक्तफलाः, उस्र अनड्वान्, आलब्धाः कृतालम्भा ग्राह्याः ।

बौधायनः—"अथ सतिलगोधूमशालिमुद्गकृष्णमाषश्यामाक-प्रियङ्गुव्रीहिविकारांश्च दद्यात्" इति ।

"मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् ।
अक्षारलवणं चैव प्रकृत्या हविरुच्यते" इति ।

अनुपस्कृतमविकृतं पूतिगन्धादिरहितं मांसम् ।

अक्षारलवणास्तु उच्यते—

"तिलमुद्गादृते शैव्यं सस्ये गोधूमकोद्रवौ ।

धान्यकं देवधान्यं च शमीधान्यं तथैक्षवम् ॥

स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः" इति ।

केचित्तु अत्र क्षारशब्देन सज्जीक्षारादिकं पठन्ति । तदत्राग्राह्यम्, गोधूमप्रभृतीनां महता प्रयासेन श्राद्धद्रव्यत्वेनोपपादितत्वात्, तस्मादन्यत्र सज्जीक्षारादिकं लवणमत्र सामुद्रं सैन्धवं वा ग्राह्यं न कृत्रिमं ग्राह्यम् । तथा च ब्रह्माण्डपुराणे—

"सामुद्रं सैन्धवं चैव प्रकृत्या हविरुच्यते ।

पवित्रे परमे ह्येते प्रत्यक्षे अपि सर्वदा" इति ।

प्रत्यक्षवचनं पवित्रत्वप्रतिपादनार्थं, न पुनर्दानाय, दानं चौदनादिना संमिश्रस्यैवेति ।

आदित्यपुराणे—

"मधुकं रामठं चैव कर्पूरं मरिचङ्गुडम् ।

श्राद्धकर्मणि शस्तानि सैन्धवं त्रिपुसं तथा" इति ।

त्रिपुसशब्देन कश्चित्संस्कारको द्रव्यविशेषः । रामठं हिङ्गु ।

"यत्किञ्चिन्मधुना मिश्रं गोक्षीरं घृतपायसम् ।

दत्तमक्षयमित्याहुः पितरः पूर्वदेवताः" इति ।

अत्र दध्यादिकं महता प्रयासेनापि गव्यमेवोपादेयम्, तदसम्भवे माहिषम् ।

त्रिकाण्डमण्डनः—

"घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् ।
आजं वा तदलाभे स्यात् इति शास्त्रविनिश्चयः" इति ।

अजाक्षीरसम्भूतमाजम् । क्षीरादिविषयेऽपि तेनैवोक्तम्—
"यत्र मुख्यं दधि क्षीरं तत्रापि तदलाभतः ।
अजादेः क्षीरदध्यादि ग्राह्यमेव न संशयः ॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मांसान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु ॥
षण्मासान् मृगमांसेन पार्षतेनेह सप्त वै ।
अष्टावैणेन मांसेन रौरवेण नवैन तु ॥
दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकच्छपयोर्मांसं मासानेकादशैव तु ॥
संवत्सरं तु गव्येन पयसा पायसेन वा ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादश वार्षिकी ॥
कालशाकं महाशल्काः खड्गं लोहामिषं मधु ।
आन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः" इति ।
वार्ध्रीणसो रक्तवर्णो वृद्धच्छागः ।

तदुक्तं विष्णुधर्मोत्तरे—

"त्रिःपिबं त्विन्द्रियक्षीणां यूथस्याग्रसरं तथा ।
रक्तवर्णं तु राजेन्द्र छागं वार्ध्रीणसं विदु"रिति । महाशल्को मत्स्यविशेषः । खड्गः खड्गमृगलोहो लोहितवर्णछागः ।

याज्ञवल्क्यः—

"खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।
लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च ॥
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।
तथा वर्षात्रयोदश्यां मघासु च विशेषतः" इति ।

मधु माक्षिकम् । मुन्यन्नं सारण्यं नीवारादि । लोहस्तु छागः, तदामिषं लोहामिषम् । महाशाकं कालशाकम् । स्पष्टमन्यत् । अत्र यद्यपि मांसमध्वादीनि सर्ववर्णानां सामान्येन श्राद्धयोग्यानि दर्शितानि तथाऽपि पुलस्त्योक्ता व्यवस्था द्रष्टव्या—

"मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधुप्रधानं शूद्रस्य सर्वेषामविरोधि यत्"

इति स्मरणात् ।

अयं हि स्मृत्यर्थः—नीवारादि मुन्यन्नं यच्छ्राद्धयोग्यमभिहितं तद् ब्राह्मणस्य प्रधानं समग्रफलदम्, यच्च मांसं तत् क्षत्रियवैश्ययोः प्रधानं, यत् क्षौद्रमुक्तं तद् शूद्रस्य, एतत् त्रितयव्यतिरिक्तं यदविरोधि चाप्रतिषिद्धं वस्तु शाकादि, यच्च विहितं हविष्यं कालशाकादि, तत्सर्वेषां सर्वफलदं ननु ब्राह्मणस्य नीवारादि द्रव्यमेव प्रधानं, क्षत्रियवैश्ययोस्तु मांसं प्रधानमित्युक्तं, तत्कथं, यतो ह्यविशेषेण मांसं श्राद्धादौ विहितं तद् ब्राह्मणव्यतिरिक्तानामेवेदमिति कश्चिन्नियमहेतुरस्ति येनेदृशी व्यवस्था भवेत्, अत्राभिधीयते सत्यमस्ति बहुषु ग्रन्थेषु श्राद्धादौ मांसोपादानं तद्यत्र भक्ष्यतया प्रवृत्तिस्तद्विषयमेवेत्यवगन्तव्यं, न सर्वविषयं, लोकगर्हितत्वात् ।

तदाह याज्ञवल्क्यः—

"कर्मणा मनसा वाचा यत्नाद् धर्मं समाचरेत् ।

अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु" इति ॥

ततः श्राद्धे मांसविधानं क्षत्रियादिविषयं ज्ञेयम् ।

"विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेत् ।

तृप्यन्ति पितरो यस्मादलाभे पायसादय"

इति वचनं क्षत्रियादिविषयं ज्ञेयम् ।

तथाऽत्र पितृगीता गाथा भवति—

"कालशाकं महाशल्कं मांसं वार्ध्रीणसस्य च ।

विषाणवर्ज्या ये खड्गा आसूर्यं तान् लभेमहि" इति ।

यमः—

"भक्ष्यं भोज्यं तथा पेयं यत्किंचित् पच्यते गृहे ।

न भोक्तव्यं पितॄणां तदनिवेद्य कथंचन ॥

यद्यद्ददाति विधिवत्सम्यक् श्रद्धासमन्वितः ।

तत्तत्पितॄणां भवति परमं प्रियमेव हि ॥

यवव्रीहिसगोधूमतिला मुद्गाः ससर्षपाः ।

प्रियङ्गवः कोविदारा निष्पावाश्चात्र शोभनाः ॥

अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः" इति ।

अन्नं—भक्ष्य—भोज्य—लेह्य—चोष्य—पेयात्मकं पञ्चविधं दृष्टम् । यद् ब्राह्मणाय कर्त्रे पितृभ्यो रुचितं तत्तुल्यमानं हविष्यमनिषिद्धं च श्राद्धहविर्योग्यम् । व्रीहि—शालि—यव—गोधूम—मुद्ग—माष—मुन्यन्न—कालशाक—महाशल्क—एला—शुण्ठी—मरिच—हिङ्गु—गुड—शर्करा—

कर्पूर—सैन्धव—साम्भर—पनस—नारिकेल—कदली—बदर—गव्य-पयो—दधि—घृत—पायस—मधु—मांस प्रभृति स्मृत्यन्तरप्रसिद्धं वेदितव्यम्। पनसमिति कौङ्कणदेशप्रसिद्धः फलविशेषः । मुन्यन्नमिति यदफालकृष्टश्यामाकनीवारादि तदभिधीयते। तच्च वानप्रस्थप्रसिद्धम्।

हविष्यमित्यनेनैवायोग्यस्य स्मृत्यन्तरप्रसिद्धकोद्रवमसूरचणक कुलित्थ पुलक निष्पाव राजमाष वार्ताक बृहतीद्वयोदकी वंशाङ्कुर पिप्पली वचा शतपुष्पोमा विहल कृत्रिमलवण माहिषचमरीक्षीर दधि घृत कवकादीनि निषिद्धानि। यान्यत्राप्रसिद्धानि द्रव्याणि तानि वैद्यकशास्त्रे द्रष्टव्यानि। क्रोधहेतुसम्भवेऽप्यक्रोधनः, अत्वरोऽव्यग्रः। देयमात्रशेः शब्दात् यत् किंचिदुच्छिष्यते तद्द्यात्। उच्छेषणस्य दासवर्गभागित्वात्। उच्छेषणं ब्राह्मणेषु विसर्जितेषु निक्षेप्यं भूमौ।

"उच्छेषणं भूमिगतमजिह्मस्याशठस्य च।
दासवर्गस्य तत् पित्र्ये भागधेयं प्रचक्षते" इति मनुः (३२४६)

अथ श्राद्धे वर्ज्यद्रव्याणि।

तत्र व्यासः—

"अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा।
हिङ्गुर्द्रव्येषु शाकेषु कालानलशुभास्तथे"ति॥

कोद्रवाः कोरदूषकाः। पुलकाः, छान्दसोऽत्र मध्याक्षरदीर्घाभावः। संस्कारद्रव्येषु हिङ्गुद्रव्यमश्राद्धेयम्। कालः कृष्णाञ्जनः, अनलश्चित्रकः, शुभाः शुम्भाख्यः शाकविशेषः। एतानि शाकादीनि न श्राद्धेयानि।

ननु—

"मधुकं रामठं चैव कर्पूरं मरीचं गुडम् ।

इत्यादित्यपुराणे हिङ्गु द्रव्यस्य श्राद्धेयता अत्राश्राद्धेयता अतो विरोधः परस्परम् । अत्राभिधीयते—अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति वाक्यविहितयोः षोडशिग्रहणाग्रहणयोरिव विकल्प इष्यते ।

तथा विष्णुपुराणे—

"श्राद्धे न देया पालङ्क्या तथा निष्पावकोद्रवौ ।

मसूर क्षार वार्ताक कुलत्थ शण शिग्रवः" इति ॥

क्षारो यवक्षारादिः । भरद्वाजः—

"मुद्गाढकीमाषवर्जं विदलानि दद्यात्" इति ॥

मुद्गः कृष्णेतरो माषः कुलत्थानुपलक्षयति ।

तदुक्तं चतुर्विंशतिमते—

"कोद्रवा राजमाषाश्च कुलत्था वरकास्तथा ।

निष्पावाश्च विशेषेण पञ्चैतांस्तु विवर्जयेत् ॥

यावनालानपि तथा वर्जयन्ति विपश्चितः ।

तैलमप्यापदि प्राज्ञाः संप्रयच्छन्ति याज्ञिकाः" इति ।

आपदि अन्यवस्त्वभावे यावनाल कञ्जिका तैलैरपि कार्येति । वरका वनमुद्गाः । प्रसिद्धमन्यत् । अत्र निष्पावनिषेधः कृष्णनिष्पावविषयः ।

तथा च स्मृतिः—

"कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणी"ति ।

वर्जयेद् गृञ्जनं श्राद्धे काञ्जिकं पिण्डमूलकम् ।
करञ्जं येऽपि चान्ये वै रसगन्धोत्कटास्तथा" इति ।

दीर्घानाला नालिका अग्रभागेऽपल्लवा । शणछत्राकं शिलीन्ध्रः, कुम्भी श्रीपर्णिका । कम्बुकं वृन्तालाबुकम् । गृञ्जनं विषलिप्तशस्त्रहतं मृगमांसम् ।

तदुक्तम्—

"विषलिप्तेन शस्त्रेण मृगो यः परिहन्यते ।
अभक्ष्यं तस्य तन्मांसं तद्धि वै गृञ्जनं स्मृतम्" इति ।

अथवा रक्तनालं गृञ्जनम् ।

तदुक्तं सुश्रुते—

"रक्तनालं गृञ्जनकमि"ति । रक्तकन्दविशेषो गृञ्जनम् । स च पलाण्डुविशेषः । इदं गृञ्जनं सर्वथाऽभक्ष्यमेव ।

तथा पुराणे—

"लशुनं गृञ्जनं चैव पलाण्डुं पिण्डमूलकम् ।
कलम्बान्यपि चान्यानि हीनानि रसगन्धतः" इति ।

केचित्तु शब्दार्थानभिज्ञा गृञ्जनभ्रान्त्या गाजरमभक्ष्यं मन्यन्ते तद्विचारासहम्, भक्ष्यमूलेषु गाजरस्य पाठात् ।

तदुक्तं ब्रह्माण्डपुराणे—

"वैकङ्कतं नारिकेलं शृङ्गाटकपरूषकौ ।
पिप्पली मरीचं चैव कट्फलं बृहतीफलम् ॥
नारङ्गं चात्र वै देयं दीर्घमूलकमेव चे"ति ।

तच्च मूलकं चतुर्विधम् । यदवोचद्धन्वन्तरिः—

स्वप्रणीते आयुर्वेद निघण्टौ—

"मूलकं हरिपर्णं च मूलिकाक्षारसेवितम् ।
नीलकन्दं महाकन्दं रुचिष्यं हस्तिदन्तकम् ॥
चाणक्य मूलकं चान्यच्छालेयं मरुसंभवम् ।
शाखामर्कटकं मिश्रं विष्णुगुप्तमनं तथा ॥
चतुर्थमूलिकं चान्यन्निर्दिष्टं तद्धि गाजरम् ।
पीतकं मधुरं स्वादु तच्च नारङ्गवर्णकमि"ति ॥

नन्वेतदेव गृञ्जनमिति चेन्नैवम् । सुश्रुतकारादिभिर्गाजरात् गृञ्जनस्य भेदेनाभिहितत्वात् । गृञ्जनं प्रकृत्य—

"कन्दो महौषधं, महाकन्दोऽन्यो, गृञ्जनो दीर्घपत्रकः" इति ।

"पलाण्डुर्यवनेष्टश्च लाक्षाको द्रुद्रुमः स्मृतः ।
लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम् ॥
करणश्च पलाण्डुश्च लतार्कश्च परारिका ।
गृञ्जनो यवनेष्टश्च पलाण्डोर्दश जातयः" इति ॥

तथाऽन्यत्र—

"तीक्ष्णो गृञ्जनको ग्राही पितॄणां हितकृन्न सः" इति ।

तथा—

"वर्णगन्धरसैस्तुल्यो गार्जारस्तु पलाण्डुना ।
पर्णाग्रमूलसूक्ष्मत्वात् भिद्यतेऽसौ पलाण्डुत" इति ॥

ततः प्रद्वेषमात्रेण गाजरगृञ्जनयोरभेदं मन्यन्ते । राजनिघण्टुसुश्रुतादिषु तु महान् भेदः ।

तथोक्तं वाक्यमीमांसायाम्—'रक्तनालं गृञ्जनकमि''ति सुश्रुतो-

क्तनालविषये वाचकस्य गृञ्जनशब्दस्यान्धपरम्परया मन्वादिना गाजरमभक्ष्यं मन्यन्ते । उक्तं चैतद् बहु प्रायश्चित्ते ।

शंखः--

"वर्जयेद् गृञ्जनं श्राद्धे काञ्जिकां पिण्डमूलकम् ।
कलम्बां यानि चान्यानि हीनानि रसगन्धतः ॥
श्राद्धकर्मणि वर्ज्यानि कारणं चात्र वक्ष्यते ।
पुरा देवासुरे युद्धे निर्जितस्य बलेः सुरैः ॥
ब्राह्मणेभ्यो विस्फुरन्तः पतितास्तोयबिन्दवः ।
तत एतानि जातानि वर्ज्यानि श्राद्धकर्मणि ॥
पिप्पली मरिचं चैव पटोलं बृहतीफम् ।
वंशं करीरं सुरसं गर्जकं भूतृणानि च ॥
अवेदोक्ताश्च निर्यासा लवणान्यूषराणि च ।
श्राद्धकर्मणि वर्ज्याणि याश्च नार्यो रजस्वला" इति ।

वंशः कुरीरः वंशाङ्कुरः । सर्जकं श्वेतकुठेरपत्रम् । अवेदोक्ता वेदप्रतिपिद्धा निर्यासा व्रश्चनप्रभवाः । ऊषराणि कृतलवणानि । रजस्वला दिनत्रयादूर्ध्वमनिवृत्तरजस्का ।

तथा योगीश्वरः--

"नालिका शणछत्राकं कुसुम्भालाबुविड्भवान् ।
कुम्भी कंवुक--वृन्ताकं कोविदारांश्च वर्जयेत् ।
तथा कालप्ररूढानि पुष्पाणि च फलानि च ।
विकारवच्च यत् किञ्चित् प्रयत्नेन विवर्जयेत्" इति ॥

तथाच स्मृत्यन्तरम्—

"भक्तांश्च दधिनीपमातुलिङ्गकानि वर्जयेदि"ति ।

तथा भरद्वाजः—

"नक्तोद्धृतं तु यत्तोयं पल्वलाम्बु तथैव च ।
स्वल्पाम्बु कूष्माण्डफलं वज्रकन्दश्च पिप्पली ॥
तन्दुलीयकशाकं च माहिषं च पयो दधि ।
शैम्बिकानि करीराणि कोविदारं गवेधुकम् ॥
कुलत्थं शणजीराणि करम्भाणि तथैव च ।
अब्जादन्यद्रक्तपुष्पं शिग्रुः क्षारस्तथैव च ॥
नीरसान्यपि सर्वाणि भक्ष्यभोज्यानि यानि च ।
एतानि नैव देयानि सर्वस्मिन् श्राद्धकर्मणि ॥
आविकं मार्गमौष्ट्रं च सर्वमैकशफं च यत् ।
माहिषं चामरं चैव पयो वर्ज्यं विजानते"ति ॥

शङ्खः—

"कृष्णाजाजी विटं चैव शीतपाकी तथैव च ।
वर्जयेल्लवणं सर्वं तथा जम्बुफलानि च ॥
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत् ।

कृष्णाजाजी कृष्णजीरका, विटं विडाख्यं लवणम् ।

ब्रह्माण्डे—

"आसनारूढमन्नाद्यं पादोपहतमेव च ।
अमेध्यान्तर्गतैः स्पृष्टं शुष्कं पर्युषितं च यत् ॥
द्विः स्विन्नं परिदग्धं च तथैवाग्रावलेहितम् ।

शर्कराकीटपाषाणैः कचैर्यच्चाप्युपद्रुतम् ।
पिण्याकगर्भितं चैव तथाऽतिलवणं च यत् ॥
सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षं लवणीकृताः ।
वाग्भावदुष्टाश्च तथा दुष्टैश्चोपहता अपि ॥
वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि" इति ।

द्विःस्विन्नं द्विःपक्वं, परिदग्धमतिदग्धं, अग्रावलेहितं पूर्वमेवान्येनास्वादितं, मथितं विलोडितं निर्जलं दधि । सिद्धा भक्ष्या आमलकादयः । प्रत्यक्षलवणीकृताः भोक्तरि पश्यति लवणेन मिश्रिताः ।

याज्ञवल्क्यः—

"सन्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत् ।
औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम्" इति ।

या वृषेण सन्धीयते सा सन्धिनीत्युच्यते । अनिर्दशरात्राः, वत्सरहिताः । तासां गवां पयः परिवर्जयेत् । आरण्यकपयोनिषेधस्तु आरण्यमहिषीपयोव्यतिरिक्तविषयः ।

"अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा ।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥
आरण्यानां च सर्वेषां मृगाणां माहिषं विना"

इति मनुस्मरणात् ।

सन्धिनीक्षीरप्रभृति कामतो भक्षयित्वा त्रिरात्रमुपवासः । अकामतश्चेदहोरात्रमुपवासः । तदाह मनुः—

"शेषेषूपवसेदहरि"ति ।

तथा ब्राह्मपुराणे—

"घृतात् फेनं घृतान्मण्डं पीयूषमथ चार्द्रगोः ।
सगुडं मरिचाक्तं तु तथा पर्युषितं दधि ॥
तथा तक्रमपेयं च नष्टस्वादं च फेनवत्" इति ॥

घृतात् फेनं घृतादुद्धृत्य फेनमपेयं, घृतादुद्धृत्य मण्डं यत्तदपेयम् । आर्द्रगोः प्रसवप्रभृत्यनिवृत्तरजस्काया गोः क्षीरमपेयम् । गुडमरिचोपेतं पर्युषितं दधि चापेयम्, यच्च बहुदिनस्थित्या दीर्णं स्फुटितं, दीर्घकालस्थित्या यच्च नष्टास्वादं सफेनं तच्च न पेयम् ।

तथा मनुः—

"लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा ।
शेलुं गव्यं च पीयूषं प्रयत्नेन विवर्जयेदि"ति (१०५) ।

लाक्षाप्रभृतयो लोहिता वृक्षनिर्यासा इत्यभिधीयन्ते लोहितव्यवहरणात् । निर्यासतयाऽन्येपि पाटलश्वेतपर्णहिङ्गुकर्पूरप्रभृतयोऽप्रतिषिद्धा इत्यवगम्यते । शेलुः श्लेष्मान्तकः । अभिनवं पयः पीयूषः । "पीयूषोऽभिनवं पयः" इत्युक्तेः । तच्च नवप्रसूतायाः ।

तथाच हारीतः—

"न वटप्लक्षोदुम्बरदधित्थनीपमातुलिङ्गानि भक्षयेदि"ति ।

तथा भविष्ये—

"लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
वार्ताकं नालिकालाबु जानीयाज्जातिदूषितमि"ति ।

श्वेतकन्दः पलाण्डुविशेषः । नित्यभोजने तु वर्ज्यतया उक्ताः शाकाः ।

पैठीनसिः—

"वृन्ताकनालिकापौतीकंकुसुम्भाश्मन्तकाश्चे"ति ।

शाका न भक्ष्याः । वृन्ताकनिषेधस्तु श्वेतवृन्ताकविषयः ।

"कण्डूरं श्वेतवृन्ताकं कुम्भाण्डं च विवर्जयेदि"ति

देवलस्मरणात् । कण्डूरा प्रावृषेणी तस्याः फलं कुम्भाण्डं कुम्भवद्वर्त्तुलं वृत्तालाबुसदृशम् ।

तथा स्मृत्यन्तरम्—

"कुम्भाण्डं महिषीक्षीरमाढक्यो राजसर्षपाः ।
चणका राजमाषाश्च घ्नन्ति श्राद्धमसंशयम् ॥
पिण्डालुकं च तुण्डीरं करमर्दश्च कालिका ।
कूष्माण्डं बहुबीजानि श्राद्धे दत्वा व्रजत्यधः" ॥

करमर्दः सुषेणः, बहुबीजानि बीजपूरादीनि द्रव्याणि नित्य-भोजनेऽप्रतिषिद्धान्यपि श्राद्धे न देयानि ।

"क्षीरादि माहिषं वर्ज्यमभक्ष्यं तच्च कीर्तितमि"ति

षट्त्रिंशन्मतवचनात् ।

वशिष्ठः—

"गोमहिष्याजानामनिर्दशाहानां पयो न पेयम्" ।

तथा गौतमोऽपि—

"स्यन्दिनी-यमसू-सन्धिनीनां चेति क्षीरं न पेयमि"ति ।

स्यन्दिनी स्वयमेव क्षीरं प्रस्यन्दमाना प्रस्यन्दमानयोनिर्वा । यमसूः प्रसूतयमला ।

बौधायनः—

"क्षीरमपेयं विवत्साया अन्यवत्सायाश्चे"ति ।

जात्या विशुद्धमपि कृमिकीटकेशादिसंसर्गमाहारं च वर्जयेत् ।

"विशुद्धमपि चाहारं मक्षिकाकृमिजन्तुभिः ।
केशरोमनखैर्वापि दूषितं परिवर्जयेत्" इति देवलस्मरणात् ।

जन्तवोऽत्र मृता विवक्षिताः । केशादिदूषितमन्नं पानीयं वा सति सम्भवे वर्ज्यम् । असम्भवे केशादिकमुद्धृत्य उदकेन संप्रोक्ष्य हिरण्यसंस्पर्शनं कृत्वा भुञ्जीत । "केशकीटावपन्नं—विगर्हितं श्वभिराघ्रातं प्रेषितं वाऽन्नं पर्युषितं गृध्रचाण्डालचक्षुवेक्षितमभोज्यमन्यत्र हिरण्योदकैः स्पृष्टादि"ति सुमन्तुस्मरणात् । कष्टायामापद्यपि श्वादिभिरवलीढं न भुञ्जीत—

"अवलीढंच मार्जारध्वाङ्क्षकुक्कुटमूषकैः ।
भोजनं नोपभुञ्जीत तदमेध्यं हि सर्वतः" इति देवलस्मरणात् ।

अन्यदपि स्मृत्यन्तरे वर्ज्यतयाऽभिहितम्—

"नापणीयमन्नमश्नीयात् न द्विःपक्कं न पर्युषितम् ।
घृतं वा यदि वा तैलं विप्रो नाद्यान्नखच्युतम् ॥
यमस्तदशुचि माह तुल्यं गोमांसभक्षणैः ।
हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च ॥
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्विषम् ।
तथैकपाणिना दत्तं शूद्रदत्तं न भक्षयेत्" इति ।
आपणस्थान्नप्रतिषेधो ब्राह्मणादिव्यतिरिक्तविषयः ।

तदुक्तं शङ्खेन—

"अपूपाः सक्तवो धानास्तक्रं दधि घृतं मधु ।
एतत्पण्येषु भोक्तव्यं सान्द्रलेपो न चेद् भवेत्" इति ॥

तथा—पर्युषितमपि किंचिद्भोक्तव्यम् । यथा—

"अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ॥
अस्नेहा अपि गोधूमयवगोरसविक्रियाः" इति ॥

तथा देवलः—

"अभोज्यं प्राहुराहारं शुक्तं पर्युषितं च यत् ।
अपूपा यवगोधूमविकारा मण्डकादयः" ॥

वटका माषादिपिष्टमयाः प्रसिद्धाः ।पुनरपूपग्रहणं व्रीह्याद्यपूपविकारोपादानार्थम् । कृसरं तिलोदनम् । स्नेहसंयुक्तं घृतेन दध्ना वाऽभिघारितम् । एतत् सर्वं पर्युषितं शुक्तव्यतिरिक्तं भोज्यम् । शुक्तमत्यम्लम् ।

"अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिरि"ति
बृहस्पतिस्मरणात् ।

ततश्च शुक्तं स्वभावतो यदनम्लं केवलकालपरिवासेन द्रव्यान्तरसंसर्गकालपरिवासाभ्यां वा यदम्लीभवति पायसादि न दध्यादि तदभिधीयते । रात्र्यन्तरितं पर्युषितं, ततः शुक्तप्रतिषेधो दध्यादिव्यतिरिक्तविषयः ।

"दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसम्भवम् ।
रूक्ष्यं सपक्वं भक्ष्यं स्यात् सर्वं युक्तमितिस्थितिरि"ति
शङ्खस्मरणात् ।

देवलः—

"अभोज्यं प्राहुराहारं शुक्तं पर्युषितं सदा ।
अन्यत्र मधुसक्तुभ्यां भक्तेभ्यः सर्पिषो गुडात्" ।

शङ्खः—

"नाद्याच्छास्त्रनिषिद्धं तु भक्ष्यभोज्यादिकं द्विजः" इति ।

अभोज्यमित्यनुवृत्तौ वसिष्ठः—

"अन्नं पर्युषितं कामं दध्ना घृतेन वाऽभिघारितमुपभुञ्जीत । अयमर्थः—दध्ना घृतेन वाऽभिघारितं सत्पर्युषितमन्नं काममश्नीयात् इति । उपभोजयेदित्यनुवृत्तौ—

आपस्तम्बः—

"उदकेऽवधाय परकृतान्नं पर्युषितमि"ति। यदा परान्नमुदकेऽवधाय स्थापितं तदा तदन्नं पर्युषितमपि उपभुञ्जीत । एवं च काञ्जिकं सम्पादयितुं तण्डुलप्रक्षालनोदके निहितस्यान्ननिस्रावस्य रात्र्यन्तरितस्य पर्युषितत्वमभोज्यत्वं नास्तीति । तज्जातस्य काञ्जिकस्यापि अभोज्यत्वं नास्तीति मन्तव्यमिति । एवमेवाभिहितं स्मृतिचन्द्रिकाकारैरपि ।

मनुः—

"चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः ।
यवगोधूमजं चैव सर्वा च रसविक्रिये"ति ( ४–२५ )॥

यवगोधूमाक्ताः स्नेहसंयोगरहिता अपि अनेकरात्र्यन्तरिता द्विजातिभिर्भोज्याः पयोविकारा दध्यादयः । ततो मण्डकाः

सक्तवस्तथा अन्य ओदनः। तत्र कदर्याऽवीरा षण्ढ रङ्गावतार स्वैरि वार्धुषिक मणिकाराऽदीक्षित चिकित्सक विद्वेषि क्रूरोग्रपतित व्रात्य दाम्भिकोच्छिष्टभोजि स्वर्णकार–स्त्रीजित–ग्रामयाजि–शस्त्र विक्रयि श्ववृत्ति नृशंस–राजरजक–कृतघ्न–वधजीवि–सुराजीवि–कुटिल–पिशुन सोमविक्रयि–लुब्ध वीणावादनजीवि दीक्षा-संस्काराऽयुक्त गान्धर्व–कितव–तस्कर–ध्वजि–दारोपजीवि–शूद्राध्या-पक–शूद्रयाजक–तुलातोलक–चित्रकर्म–चर्मविक्रयि, वधोपजीवि–शकटोपजीविनः एते अभोज्यान्नाः। ब्रह्मचारिणो गृहिणश्चान्नं भोज्यम्। मुनेरन्नं च भोक्तव्यम् ।

अङ्गिरा अपि–

"षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।
स तु जीवन् भवेच्छूद्रो मृतः श्वा चैव जायते" इति ।

तथा—

"पञ्चनखांश्च न भक्षयेत्" ।

तथाच मनुः—

"सर्वान् पञ्चनखांस्तथा न भक्षयेदि"ति ।

अत्र पञ्चनखानामभक्ष्यत्वनिषेधो गोधादिपञ्चकव्यतिरिक्तविषयः ।

"पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्तिताः ।
गोधः कूर्मः शशः श्वाविद् शल्लकश्चेति ते स्मृताः"
इति देवलस्मरणात् ।

धर्मत इति—हिंसामकृत्वा क्रयादिप्राप्ता भक्ष्याः ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-
समस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्म-
हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे
श्राद्धसारे वर्ज्यावर्ज्यनिर्णयः ॥



अनुपहतद्रव्याणि श्राद्धादिषूपयोगीन्यभिहितानि,

## अथ द्रव्यशुद्धिरभिधीयते—

तत्रेतरापेक्षया भूमेः सर्वसाधारणाधिकरणतया प्रथमं तत्रोपहताया भूमेः सप्तधा शुद्धिः । खननं, पूरणम्, दहनम्, उदकवर्षणं, लेपनं, गोभिराक्रमणं, काल इति । यावान् कालो गन्धलेपादिना भूशोधनं करोति स उच्यते ।

"खननात् पूरणाद्दाहाल्लेपनादभिवर्षणात् ।
गोभिराक्रमणात् कालात् भूमिः शुद्ध्यति सप्तभिरि"ति यमस्मरणात् ।

तथा याज्ञवल्क्यः—

"भूशुद्धिर्मार्जनाद्दाहात् कालाद् गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपात् गृहं मार्जनलेपनात्" ।

अत्र भूग्रहणेनैव सिद्धे पुनर्गृहवचनं प्रतिवासरं तस्य मार्जनलेपप्राप्त्यर्थम् ।

तथा मनुरपि—

"सम्मार्जनेनाञ्जनेन सेकेनोल्लेखनेन च ।
गवां च परिवासेन भूमिः शुद्ध्यति पञ्चधा"

इति । मार्जनादिकं तु सर्वदुष्टत्वहेतुभिः पुनः पुनरुपहतभूमिशुद्ध्यापादकम् । अन्यथोपहतयनुरूपं मार्जनादि अनेकप्रकारमध्ये द्वित्रादिकं यथायोग्यं शुद्धेः कारणम् । तस्मादेवं सप्तभिः पञ्चभिर्वा प्रकारैः भूमिशुद्धिः कर्तव्येति वृत्तम् । भूमेरशुद्ध्यापादकानि तावदनेकानि सन्ति, तथाहि—जननमरणचाण्डालाधिष्ठानमूत्रपूरीषश्वशूकरखरोष्ट्रस्पर्शकेशास्थिभस्मप्रभृतीनि ।

"यत्र प्रसूयते नारी, म्रियते दह्यतेऽथवा ।
चाण्डालोऽध्युषितो यत्र यत्र मूत्रादिसङ्गतिः ॥
एवं कल्मषभूयिष्ठा भूरमेध्या प्रकीर्तिता ।
श्वशूकरखरोष्ट्राद्यैः संस्पृष्टा दुष्टतां व्रजेत् ॥
अङ्गारतुषकेशास्थि भस्माद्यैर्मलिना भवेत्" इति । तत्र

"पञ्चधा वा चतुर्धा वा भूरमेध्या विशुद्ध्यती"ति वाक्योक्ता अमेध्याया भूमेः शुद्धिः । चाण्डालाध्युषिताया भूमेर्गन्धार्द्रताद्यपनयनदहनकालगोक्रमणसेकोल्लेखनैः शुद्धता । यत्र मनुष्या जायन्ते म्रियन्ते वा साऽत्यन्तदुष्टा दाहातिरिक्तैश्चतुर्भिः शुद्ध्यति ।

देवलः—

"पञ्चधा वा चतुर्धा वा भूरमेध्या विशुद्ध्यति ।

दुष्टा त्रिधा द्विधा वाऽपि शुद्धयते मलिनैकधे"ति वाक्यात् ।

गोक्रमणासेकोल्लेखनैः शुद्धा स्यात्, मलिना तु भूमिरुल्लेखनेनैकेन शुद्धा भवति इति ।

अथवा ।

"गोचर्ममात्रमब्बिन्दुः गोः शोधयति पातितः ।
सगूढमसगूढं वा यत्र लेपो न दृश्यते" इति शुद्धिः ॥

## अथ गृहशुद्धिः ।

तत्र योगी—

"गृहशुद्धिं प्रवक्ष्यामि अन्तस्थशवदूषणे ।
प्रोन्मृज्य मृन्मयं भाण्डं सिद्धमन्नं तथैव च ॥
गृहादपास्य तत् सर्वं गोमयेनोपलेपयेत् ।
गोमयेनोपलिप्याथ गृहं मार्जनलेपनात्" ॥

तथा गुरुः—

"गृहस्य मार्जनं लेप" इति ।

तथा वसिष्ठः—

"गोमयेनोपलिप्याथ छागेनाघ्रापययेद् बुधः ।
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिणा ॥
सर्वमभ्युक्षयेद्वेश्म ततः शुद्धयेदसंशयमि"ति ।

बौधायनः—

"घनाया भूमेरुपघात उपलेपनम्, ऊषरायाः कर्षणम्, छन्नाया मेध्याया मृदमाहृत्य प्रच्छादनम् । ऊर्द्धं तु शवोपघाते भित्ति-

तक्षणं, सूर्यरश्मिप्रवेशोऽग्निज्वालाभिमर्शनम्। क्लिन्नां कृमिकीटाद्याक्रान्तामन्यतो मृद्माहृत्याच्छादयेत्" इति।

विष्णुः—

"असपिण्डे स्ववेश्मनि मृते एकरात्रमाशौचमि"ति।

तथा अङ्गिराः—

"गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन।
अशौचं तस्य विज्ञेयं त्रिरात्रं नात्र संशयः" अपरो विशेषः—

तत्र भरद्वाजः—

"गृहे शूद्रादिमरणे दशाहमशुचिर्भवेत्।
शूद्रान्त्यश्वपचादीनामेकद्वित्रिचतुर्थकमि"ति॥

पुनः शूद्रग्रहणमसच्छूद्रविषयम्। रजकादयोऽन्त्याः।

वृद्धवशिष्ठः—

"जाताशौचे मृताशौचे यद् गृहे स्थापितं भवेत्।
अशौचान्तेऽथ सम्प्रोक्ष्य शमीदर्भकुशान्वितः॥
पक्वमन्नं तथा मांसं क्षीरदध्यादिकानपि।
शाकमूललतागन्धान् दैविकं नोपभोजयेत्"॥

अशुचिः शुचिरिति विप्रतिषेधात् वाग्दुष्टानि वर्जनीयानि, वाक्प्रशस्तानि गृह्णीयादिति गुरूक्ता व्यवस्था।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारे भूमिशुद्धिनिर्णयः।

## अथोदकशुद्धिरभिधीयते ।

तत्र शङ्खः—

"भूमिष्ठमुदकं शुद्धं शुचि तोयं शिलागतम् ।
गन्धवर्णरसैर्दुष्टैर्वर्जितं यदि तद्भवेत्" इति ॥

मनुः—

"आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विता" इति ।

योगी—

"शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्" इति ।

देवलः—

"उद्धृते वा प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि ।
एकरात्रोषितास्तास्तु त्यजेदाऽपः समाहित" इति ॥
ततश्च बहूदकात्तडागादापो ग्राह्याः ।

तथा—

"अक्षोभ्यानि तडागानि नदीवापीसरांसि च ।
चाण्डालाद्यशुचिस्पर्शं तीर्थतः परिवर्जयेत्" ॥

उदकावतरणमार्गस्तीर्थमुच्यते । तत्र यत्र चाण्डालादिस्पर्श-स्तद्वर्जयित्वा तत उदकं ग्राह्यम् ।

विष्णुः—

"मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा ।
अपः समुद्धरेत् सर्वाः शेषं शास्त्रेण शोधयेत् ॥
वह्निप्रज्वलनं कृत्वा कूपे पक्वेष्टकाचिते ।

पञ्चगव्यं न्यसेत् पश्चात् नवतोयसमुद्भवे ॥
जलाशयेषु स्वल्पेषु स्थावरेषु चरेषु च ।
कूपवत् कथिता शुद्धिः महत्सु तु न दूषणम्" इति ।

स्वल्पाचिरकालोपहतौ विशेषमुक्तवान्—

"वापीकूपतडागेषु दूषितेषु कथञ्चन ॥
उद्धृत्य वै कुम्भशतं पञ्चगव्येन शुद्ध्यति" ।

आपस्तम्बः—

"उपतस्थैयविरामूत्रस्त्रीरजोमद्यमेव च ।
एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत्" इति ।

स्थावरस्वल्पजलाशये कूपवदेव शुद्धिरवधेया—

"जलाशयेषु स्वल्पेषु स्थावरेषु महीतले ।
कूपवत् कथिता शुद्धिर्महत्सु च न दूषणमि"ति विष्णुस्मरणात्

मनुः—

"आपः शुद्धा भूमिगताः शुचिर्नारी पतिव्रता ।
शुचिर्धर्मपरो राजा सन्तुष्टो ब्राह्मणः शुचिरि"ति ॥

शातातपः—

"अन्यैरपि कृते कूपे सेतौ वाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते" ॥

पराशरः—

"स्त्रियश्च पतिसंसर्गे श्वा मृगग्रहणे शुचिरि"ति ॥

यमः—

"चाण्डालभाण्डे संस्पृष्टं पीत्वा कूपगतं जलम् ।

गोमूत्रयावकाहारस्त्रिरात्रेणैव शुद्ध्यती''ति ॥

नदीनां चाण्डालभाण्डादिस्पर्शेऽपि दोषाभाव एव ।

"नदी वेगेन शुद्ध्यति" इति स्मरणात् ।

चर्मकोशस्तु काषायद्रव्येण शुद्धं स्यात् । यद्यपि चर्मकोषस्य शुद्धिः कथञ्चिदुच्यते तथापि चर्मकोशगतमुदकमनापदि न ग्राह्यं न पेयम् ।

"प्रपास्वरण्ये घटगन्धकूपे द्रोण्यां जलं कोशगतास्तथाऽऽपः ।
ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतः क्वापि तथा पिबेत्तत्" ॥

अयमत्र वाक्यार्थः—अनापदि ब्राह्मणसम्बन्धि प्रपादिगतं जलं न पिबेत् । आपत्काले तु आरण्यगतप्रपासु पेयमित्यर्थः । सर्वसाधारणी पाषाणादिकृता पात्री द्रोणी कोष इति ।

नवोदकं दशरात्रेण शुद्ध्यति ।

"अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः ।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकमि''ति स्मृतेः ।

आत्मशय्येत्यादिवचनात् उदकपात्रं स्वीयमेव शुद्धं तदेव ग्राह्यं, आत्मीयशय्याद्यभावे परकीयमपि वस्त्रादिनाऽन्तर्द्धाय भोक्तव्यम् । पतितादेः शय्यादिस्पर्शे सचैलस्नानम् ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-
समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्म-
हाराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे
श्राद्धसार उदकशुद्धिः ।

# अथ सुवर्णादिशुद्धिः ।

तत्र मनुः—

अग्नेश्चापां च संयोगात् हेम रूप्यं च निर्बभौ ।
तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तर" इति ।

तथाच शातातपः—

"सौवर्णं राजतं वाऽपि शुद्धपात्रं तु न त्यजेत् ।
इतरेषां तु शुद्धिः स्यात्तापलेखन मार्जनैः ॥

हारीतः—

अद्भिः काञ्चनराजतशङ्खशुक्तीनां तद्गुणवर्णस्नेहवैवर्ण्योपहतानां यवगोधूमकलायमाषमसूर मुद्गगोमयचूर्णैर्मार्जनम् । ताम्राणामम्ललवणाभ्यां कांस्यानां भस्मना, कार्ष्णायसानां घर्षणैः शैलानां सिकताघर्षणैः, मणिमयानां शिलाघर्षणमार्जनैरिति ।

मनुः—

"तैजसानां मणीनां च सर्वस्याश्ममयस्य च ।
भस्मना ऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिरि"ति ।
"तथा राजतकांस्यानां त्रपूणां सीसकस्य च ।
शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः" ॥

योगी—

"सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ।
शाकरज्जुमूलफलवासोविदलचर्मणाम् ॥

पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ॥
स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम् ।
चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा"

इत्यादि । यज्ञाङ्गभूतं काष्ठं छुरिका शकटादि । स्पष्टमन्यत् ।

सौवर्णं सुवर्णविकारः, अब्जं शङ्खशुक्तिमुक्ताफलादि । ऊद्-ध्र्वपात्रं यागीयम्, उलूखलादिः । ऐन्द्रादयो ग्रहाः पात्रविशेषाः । 'ऐन्द्रं ग्रहं गृह्णाति, माहेन्द्रं ग्रहं गृह्णाति' इत्यादिवाक्यप्रसिद्धाः । अश्मा दृषदादि आर्द्रकादिमूलविदलनं वेणुदलादि च । चर्माजादेः । प्रणीतादीनि पात्राणि । होतृचमसादयश्चमसाः । इमान्युदकक्षालनेन शुद्ध्यन्तीति । सुवर्णरजतमया अत्यन्तानुपहता अग्नावेव शुद्ध्यन्ति "अग्नेश्चापां च संयोगादि"ति स्मरणात् ।

संवर्तः—

"विण्मूत्रोपहतं कांस्यं श्वपाकोपहतं तथा ।
भूमौ निक्षिप्य तं पात्रं घर्षणेन विशुद्ध्यती"ति ।
मनुः—"निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुद्ध्यती"ति ॥

"शूद्रोच्छिष्टश्वपाकोपहतं कांस्यपात्रं दशवारं भस्मना मार्जितं शुद्धं स्यात्" इत्यापस्तम्बः । अत्यन्तोपहतौ घर्षणमेवाभिहितम् । एवं सर्वत्र न्यूनाधिकशौचकल्पा न्यूनबहूपहतिविषया इत्यविरोधः सर्वत्र । बौधायनः—"तैजसानां विण्मूत्राद्युपहतौ पुनः करणं गोमूत्रे वा सप्तरात्रं परिवासनमि"ति । अत्र लेपनिर्हरणाशक्तौ

पुनः करणमन्यथा गोमूत्रे वास इति व्यवस्था। विष्णुः—

"सूतिकाशवविण्मूत्ररजस्वलोपहतानि अग्निना शुद्ध्यन्ती" ति। यावता न नश्यन्ति तावदग्निसंयोगः।

"दशाक्षरैर्विशुद्ध्यन्ति" इति स्मरणमल्पोपहतिविषयम्।

क्षारो भस्म, तेन दश वारं मार्ज्जनमभिमतम्। अपरो विशेषः।

"गण्डूषं पादशौचं च न कुर्यात् कांस्यभाजने।
षण्मासं तु विनिक्षिप्य पुनराकारमादिशेत्" इति।

मनुः—

"द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम्।
अपि शाकं घृतं क्षीरं स्नेहद्रव्यं पलाधिकम्॥
प्रोक्षणं संहतानां च दारवाणां च तक्षणम्"।

तथा—

लोहानां दहनाच्छुद्धिर्भस्मना गोमयेन च।
दहनात् श्वसनाद्वापि शैलानामम्भसाऽपि वा॥
काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि" इति।
"मद्यैर्मूत्रैः पुरीषैश्च ष्ठीवनैः पूयशोणितैः।
संसृष्टं नैव शुद्ध्येत पुनः पाकेन मृन्मयम्"
इति मनुस्मरणात्।

संहतपात्रे विशेषः—

"संहतानां तु पात्राणां यद्येकमुपहन्यते।
तस्यैव शोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत्" इति।

मृद्भाण्डं मलोपहतं पुनः पाकेन शुद्ध्येत् । "पुनः पाकान् महीमयम्" इति योगिस्मरणात् ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्म-हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारे सुवर्णादिशुद्धिनिर्णयः ॥

## अथान्नशुद्धिः ।

मनुः—

देवद्रोण्यां विवाहेषु यज्ञेषु प्रसवेषु च ।
काकैः श्वभिश्च यत् स्पृष्टं तदन्नं न विवर्जयेत् ॥
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हती"ति ।

देवद्रोणी देवयात्रा ।

मनुः—

"पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् ।
दूषितं केशकीटैश्च मृत्क्षेपेण विशुद्ध्यति" इति ।
मृद्ग्रहणमुदकादीनुपलक्षयति ।
"सलिलं भस्म मृद्वाऽपि" इति वचनात् ॥

पक्षिजग्धं पक्षिभक्षितम्, अवधूतं पक्षिभिरुत्क्षिप्य त्यक्तं वा । अवक्षुतं यस्योपरि क्षुतं पाकोत्तरम् । कृमिकीटनिपाते इयं शुद्धिः । सहपाकश्चेत् परित्याग एव ।

पराशरः—

"पक्वं द्रोणाधिकं त्वन्नं काकश्वाद्युपघातितम् ।
ग्रासमुद्धृत्य तन्मात्रं यत्तु लालाश्रितं भवेत् ॥
हेमोदकेन वाऽभ्युक्षेत् ज्वलनेनाम्बुनाऽथवा ।
अग्निज्वालोपसंस्पर्शात् सुवर्णमधुसर्पिषा ॥
विप्राणां ब्रह्मघोषेण पूतं भोज्यं च तद्भवेदि"ति ।

षट्पञ्चाशदधिकपलशतद्वयं द्रोण उच्यते ।

"अन्नमेकाहिकं पक्वं श्वकाकाद्युपघातितम् ।
केशकीटावपन्नं च तदप्येवं विशुद्ध्यति ॥
क्रीतस्यापि विधिर्दृष्ट एवमेव मनीषिभिरि"ति जमदग्निवचः स्वल्पविषयम् ।

## अथ द्रवद्रव्यशुद्धिः ।

तत्र मनुः—

द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम् ।
प्रोक्षणं संहतानां च दारवाणां च तक्षणम्" इति ॥

तथा—

द्रवाणां प्लावनेनैव घनानां प्रोक्षणेन च ।
छागेन मुखसंस्पृष्टमन्नं तच्छुचितामियात् ॥
पर्पटकादयो घना उच्यन्ते । द्रवद्रव्यं गोरसः ।
अपां घृततैलानां प्लावनं गोरसस्य च ।
भाण्डानि प्लावयेदद्भिः शाकमूलफलानि च" इति ॥

शङ्खः—

"उत्पवनं पूर्वभागस्थितस्य कस्य चिदंशस्यापनयनम्। अधिक-परिमाणवतां प्लावनं द्रवाणां त्याग" इति। तत्र प्रकारः। घृततैला-दीनां काकाद्युपहतानां प्रस्थमात्रपरिमाणानां किंचित् दूरीकृत्य दर्भैः पवमानः सुवर्जन इत्यनुवाकेन शुद्धिः स्यात्। स्वल्पानां त्याग एव। संहतानां कठिनानामामित्तादीनामुपहतप्रदेशत्यागेन प्रोक्षणाच्छुद्धिः। आधारभाण्डे स्थितं गोपय आदि न दुष्यति।

"आधारदोषे तु नयेत् पात्रात् पात्रान्तरं द्रवम्।
घृतं तु पायसं क्षीरं तथैवेक्षुरसो गुडः॥
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति" इति स्मरणात्॥

यमः—

"आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः।
म्लेच्छभाण्डस्थिता दुष्या निष्क्रान्ताः शुचयः स्मृताः" इति।

इदं च द्रोणाधिकद्रव्यविषयम्। देशकालाद्यपेक्षया अल्पमप्य-त्याज्यमदुष्टत्वात्।

शङ्खः—

"निर्यासानां गुडानां च लवणानां तथैव च।
कुसुम्भकुङ्कुमानां च ऊर्णाकार्पासयोस्तथा॥
विशेषात् कथिता शुद्धिरित्याह भगवान् यमः"।

निर्यासा हिङ्गुप्रभृतयः। इदं स्वल्पपरिमाणविषयम्, बहूनां तु चाण्डालादिस्पर्शेऽपि प्रोक्षणेनैव शुद्धिः। अत्यल्पानां परित्याग एव, तदपि देशकालाद्यपेक्षया परित्याज्यम्।

मृत्पर्णतृणकाष्ठानां चाण्डालस्पर्शे सोमसूर्यमारुतैः शुद्धिः । पुस्तकशुद्धिः प्रोक्षणेन । पर्णानामद्भिः प्रक्षालनं, सकृदुपभुक्तानां तूत्सर्ग एव कर्तव्यः, पुष्पफलानां द्विःकरावधूननं प्रक्षालनमभ्युक्षणमिति केचित् ।

असंस्कृतभूमिन्यस्तानां प्रक्षालनमेव, परोक्षाहृतानामभ्युक्षणम् । द्रव्यहस्तस्योच्छिष्टस्पर्शे मनूक्तो विशेषः—

"उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्" इति ।

व्यासः—

"रथ्याकर्दमतोयानि तावत्पथि तृणानि च ।
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च" इति ।

इति श्रीमल्लक्ष्मीनृसिंहचरणसरोरुहभ्रमरसकलभूखण्डमण्डनसमस्तभुवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरजिते नृसिंहप्रसादे श्राद्धसारे द्रवद्रव्यशुद्धिः ।

---

## अथ धान्यादिशुद्धिरभिधीयते ।

तत्र विष्णुः—"असिद्धस्यान्नस्य मध्ये यावदुपहतं तावदेव परित्यज्यावशिष्टं ग्राह्यम् । सतुषस्य कण्डनप्रक्षालने विधेये ।

"व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ।

तन्मात्रस्यापहाराद्वा निस्तुषांस्तु करेण वे''ति बौधायनवाक्यात्। इदमल्पद्रव्यविषयं, बहुद्रव्यं तु प्रोक्षणादिना शुद्ध्यति । व्रीहियव-गोधूमानां प्रोक्षणपर्यग्निकरणावगाहनादिभिः शुद्धिरिति कश्यपः । अवगाहनं प्रक्षालनमित्यर्थः । अनेकपुरुषोद्धार्याश्च प्रोक्षणादिना शुद्ध्यन्ति । मुद्गादिसप्तधान्यानि तानि यदाऽनेकपुरुषोद्धार्याणि भवन्ति तदा निघर्षणं विमर्दनं निर्मलीकरणं, ततोऽल्पानि चेद्दलनं प्रोक्षणं च शुद्धिरिति आदित्यपुराणे विशेषः ।

## अथ वस्त्रादिशुद्धिरभिधीयते ।

तत्र मनुः—

''अद्भिस्तु प्रोक्षणं प्रोक्तं बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते'' इति ।

व्यासः—

वस्त्रं मृदम्भसा शुद्ध्येद्रज्जुर्वैदलमेव च ।
रज्ज्वादिकं चातिदुष्टं त्याज्यं तन्मात्रमेव च ।।

वैदलं शूर्पादि ।

यमः—

''यदि मूत्रपुरीषाभ्यां रेतसा रुधिरेण च ।
चैलं समुपहन्येत अद्भिः प्रक्षालनं तु तत् ।।
यदम्भसा न शुद्ध्येत वस्त्रं चोपहतं दृढम् ।
छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते'' इति ।

दाहच्छेदौ अत्यन्तोत्तमविषयौ दरिद्रस्यानुत्तमेष्वपि छेदादिना शुद्धिः ।

योगी—

"प्रोक्षणं संहतानां च बहूनां धान्यवाससाम्" ।

स्मृत्यन्तरे—

"वस्त्रधान्यादिराशीनामेकदेशस्य दूषणम् ।
तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति" ॥

शेषं प्रोक्षणमर्हतीत्युक्तेः उद्धृतमुपहतं प्रोक्षितं शुद्धं भवतीति प्रतीयते । यदा हि राशीकृतानां सर्वेषामपि स्पर्शो भवेत् तदा प्रोक्षणादेव शुद्धिः । यदा बहूनां स्पर्शोऽल्पानामस्पर्शः तदा सर्वेषां प्रक्षालनमेव शुद्धेः कारणम् । राशेर्बहुत्वं च पुरुषग्राह्यभाराधिकत्वम् ।

योगी—

"शौचैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम् ।
सश्रीफलैरंशुपट्टं सारिष्टं कुतुपं तथा" ॥

गौरसर्षपैः क्षौममिति शेषः । अक्षारमृदुलैः कौशिकं शुद्ध्यति, कुतुपः पर्वतच्छागलोमनिर्मितः कम्बलः । अरिष्टफलं केतकं, श्रीफलं विल्वफलम् । इयं शुद्धिरधिकोपघाते वेदितव्या । अल्पे प्रोक्षणस्यैव युक्तत्वात् ।

देवलः—

"ऊर्णाकौशेयकुतुपशणक्षौमदुकूलकाः ।
अल्पशौचाद् भवन्त्येते शोषणप्रोक्षणादिभिः ॥

तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः ।
तूलिकामुपधानं च पुष्परक्ताम्बरं तथा ॥
शोषयित्वाऽऽतपे किञ्चित्करैः सम्मार्जयेन्मुहुः ।
यच्चापि वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि ॥
तान्यप्यतिमलिष्ठानि तथा तत्परिशोधयेत्" ।

पुष्परक्ताम्बरमिति प्रक्षालनेन सह रागरक्तोपलक्षणम् । ततश्च यत्प्रक्षालनेन विनष्टरागं न स्यात् प्रक्षालनेनाविनष्टरागं तदातपशोषणादिना शोष्यं, वस्त्रसहितस्यैव नाभेरूर्ध्वस्पर्शेऽवगाहनम्, अधस्तात्प्रक्षालनम्, संहतानां प्रोक्षणमिति शङ्खः । यन्त्रादुत्तीर्णानामहतनवानां वस्त्राणामभ्युक्षणम् ।

इति श्रीमल्लक्ष्मीनृसिंहचरणसरोरुहभ्रमरसकलभूमण्डलमण्डननिजामसाहसमस्तधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारे वस्त्रशुद्धिः ।

---

## अथ देहशुद्धिरभिधीयते ।

तच्च शरीरं ध्यानज्ञानतपोऽग्न्याहारराहित्यादिना शुद्ध्यति । तदुक्तं मनुना ( अ. ५. १०५–१०९ )—

"ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम् ।
वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम् ॥

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् ।
योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ॥
क्षान्त्या शुद्ध्यन्ति विद्वांसो दानेनाकार्यकारिणः ।
प्रच्छन्नपापा जाप्येन तपसा वेदवित्तमः ॥
मृत्तोयैः शोध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमाः ॥
अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति'' ॥

## अथ शुद्ध्यपवादोऽभिधीयते ।

तथाह मनुः ( अ॰ ५॰ १२९ )—

नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम् ।
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः'' इति ।

ब्रह्मचारिपदं भिक्षुकानुपलक्षयति, तथाचायमर्थः सम्पन्नः—भिक्षुस्थितं सिद्धान्नं रथ्योपसर्पणोपघातेनाशुद्धं न भवतीति । तथा च स्मरन्ति—

''अपूपाः सक्तवो धानास्तक्रं दधि घृतं पयः ।
एतत्पण्यगतं भोज्यं भाण्डलेपो न चेद्भवेत्'' इति ।

गुरुः—

''पादौ शुची ब्राह्मणानामजाश्वस्य मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम्'' ॥

शङ्खः—

"नारीणां चैव वत्सानां शकुनीनां शुनां मुखम् ।
रतौ प्रस्रवणे वृक्षे मृगयायां सदा शुचि" ॥

तथा—

"आकराः शुचयः सर्वे शकुनिः फलपातने ।
श्वा मृगग्रहणे मेध्यः स्त्रीमुखेषु च वारुणी"ति ॥

स्त्रीमुखेष्विति पीतमद्याया अपि ब्राह्मणभार्यायाः । शूद्रायां बुद्धिपूर्वकं गन्धस्वासादनपूर्वकं मद्यरसास्वादनं वर्जितम् । मुखं रतिसमये संस्पर्शेऽपि शुद्धमिति ।

यमः—

"अपूपाः काञ्चनं गावः स्त्रीमुखं कुतपं जलम् ।
न दूषयन्ति विद्वांसो यज्ञेषु चसमं यथा ॥
मुखतो गौरमेध्या तु मध्येऽजो मुखतस्तथा ।
पृष्ठतो गौर्गजः स्कन्धे सर्वतः स्त्री शुचिस्तथे"ति ॥

मनुः—

"अदुष्टाश्च तथा धारा वातोद्‌धूताश्च रेणवः ।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन" इति ।

मनुः—

"मक्षिका विप्रुषश्छाया गौरश्वः सूर्य एव च ।
राजा भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत्" इति ।

अत्र मक्षिकाग्रहणेन अवर्जनीयस्पर्शा दंशादय उपलक्ष्यन्ते ।

अत्रिः—

"मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्य भवेद्दोषस्त्वत्रेश्च वचनं तथे"ति ॥

अप्सु इति भोजनोत्तरममृतोपस्तरणमसीत्यमृतीकरणार्थं या आपो गृह्यन्ते तास्विति यावत् । मधुपर्कादिषु मन्त्रोच्चारणे कार्ये उच्छिष्टदोषो न हि ।

तथा—

"ताम्बूलेक्षुफले चैव भुक्तस्नेहावशिष्टके ।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विजः ॥
त्वग्भिः पत्रैर्मूलफलैः तृणकाष्ठमयैस्तथा ।
सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टो भवति द्विजः" इति ।

उच्छिष्ट इति आचमनार्हप्रायश्चित्तयुक्तः स उच्यते । द्रव्यैः भक्ष्यभोज्यादि। आचमनविधावेवं युक्तम्। आमणिबन्धं पाणी प्रक्षाल्याविति। यदि कश्चिद् द्रव्यहस्त उच्छिष्टस्पृष्टस्तदा तदा द्रव्यं निधायैवाचननं कर्तव्यम्। तत्रायं भावः—यथा पुरुषाशौचसम्बन्धात् द्रव्यमशुचि सम्भवति तथैव तच्छौचसम्बन्धाच्छुचि भवतीति । न चात्र द्रव्यं निधायाऽऽचामेदिति गौतमवाक्यविरोधः । गरीयो द्रव्यं निधायाचामेदित्येवं परत्वात् । ततश्च गरीयो निधायान्यदङ्गस्थं कृत्वाऽऽचामेदिति शास्त्रार्थः ।

तथा—

"दधि सर्पिः पयः क्षौद्रं भाण्डदोषो न विद्यते ।
मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः" ॥

तथा—

"मार्जारनकुलौ स्पृष्टौ शुद्धाश्च मृगपक्षिणः" इति ।

कर्मणि मार्जारस्पर्शे स्नानम् । ततश्च अदृष्टोपहतौ न दोषः ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारे धान्यशुद्धिः ॥

---

तत्र श्राद्धं द्विविधं पार्वणमेकोद्दिष्टं च । तत्र पार्वणं नाम यत्र पुरुषत्रयमुद्दिश्य क्रिया तत्पार्वणम् , एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टम् । एतद् द्विविधमपि त्रिविधं, नित्यं नैमित्तिकं काम्यं च। तत्र जीवनोपाधितया विहितं नित्यं यथा दर्शे विहितममावास्याश्राद्धम् इति । अनियतनिमित्तकं नैमित्तिकं यथा चन्द्रोपरागादौ विहितम् । कामनानिमित्ततया विहितं काम्यं यथा तिथिनक्षत्रादिषु । पुनर्द्वादशधा नित्यनैमित्तिककाम्यवृद्धिश्राद्धसपिण्डपार्वणगोष्ठीशुद्ध्यर्थकर्माङ्गदैविकयात्रापुष्ट्यर्थानि ।

तथोक्तं विश्वामित्रेण—

"नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥

कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।

यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम्" ॥

इत्येते द्वादश भेदास्तेष्वेवान्तर्भूता इति माधवाचार्यः । पृथगेवैते इति स्मृतिरत्नावलीकाराः—तल्लक्षणमाह पारस्करः—

"अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् ।

वैश्वदेवविहीनं तु अशक्तावुदकेन तु ॥

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।

तदप्यदैविकं ज्ञेयमयुग्मानाशयेद् द्विजान्" ॥

काम्यमभिलषितार्थसिद्ध्यर्थमनुष्ठीयमानम् । पुत्रजन्मविवाहादौ क्रियमाणं वृद्धिश्राद्धमित्युच्यते । सपिण्डीकरणं सपिण्डनम् । प्रतिपर्व क्रियमाणं पार्वणम् । गोष्ठ्यामिति गोष्ठे क्रियमाणम् ।

तदाह वृद्धवशिष्ठः—

"अभिप्रेतार्थकं काम्यं श्राद्धं पार्वणकं स्मृतम् ।

पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ॥

नवानीतार्घपात्रं च पिण्डं च परिकीर्तितम् ।

पिण्डपात्रेषु पिण्डेषु सपिण्डीकरणं तु तत्" ।

नवानीतार्घपात्रमिति निरन्तरप्रेतार्थं पात्रमिति यावत् । पिण्डशब्दस्तूभयलिङ्गः । गृहात् पिण्डं पततीति प्रयोगदर्शनात् ।

"प्रतिपर्व भवेद्यस्मात् तेन स द्विजसत्तमैः ।

प्रोच्यते पार्वणश्राद्धं मासिकं कैश्चिदिष्यते" ॥

मासि मासि भवं मासिकमिति यावत् ।

"गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।

बहूनां विदुषां प्राप्तौ सपात्रं पितृतृप्तये" ॥

एतच्च पृथक्पाकानुपदेशात् संसृष्टपाकस्यान्याय्यत्वात् यतो बहूनां विदुषां यत् श्राद्धस्य कर्तव्यत्वे उपस्थिते पृथक्पाकसाधन-सामग्रीरहितानां तीर्थेऽनुतप्तानां श्राद्धकरणोद्युक्तानां द्रष्टव्यमिति ।

प्रचेताः—

"यथाशक्त्याऽभिरूपाणां ब्राह्मणानां च भोजनम् ।
शुद्ध्यर्थमिति तत् प्रोक्तं श्राद्धं पार्वणवत् कृतम्" ॥

शुद्ध्यर्थमिति चीर्णप्रायश्चितस्य ब्राह्मणभोजनानन्तरं वचनादात्मनः शुद्ध्यर्थम् । अभिरूपपदं पूर्वं व्याकृतम् । कर्माङ्गमिति यागादौ क्रियमाणम् । दैविकमिति देवानुद्दिश्य क्रियमाणम् । यात्राश्राद्ध-मिति विनिर्गमनसमये क्रियमाणम् । तदाह पारस्करः—

"निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत् कृतम्" ॥

निषेको गर्भाधानम् । सीमन्तोन्नयनपुंसवनग्रहणमुभयसंस्कार-प्रतिपत्त्यर्थम् । चशब्देन जातकर्मादिकेवलपुरुषसंस्कारगुणो लभ्यते। सोमग्रहणं दर्शपूर्णमासाद्यर्थम् । वृद्धिवदित्यनेन नवदेवत्यम् ।

"देवानुदिश्य क्रियते यत्तद् दैविकमुच्यते ।
हविष्येण विशिष्टेन द्वादश्यादिषु यत्नतः" ॥

हविष्येणेति व्रीहियवशालिमुद्गरूपेण । विशिष्टेनेति । एतदेव तस्य विशिष्टत्वं यत् पायसघृतशर्कराद्ध्यादियुक्तत्वम् । द्वादशी दशम्यादितिथीनुपलक्षयति । आदिशब्दो भानुवारादीन् ।

"गत्वा देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ।

यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः" ॥

गत्वा देशान्तरमिति यद्यपि अविशेषेणाश्रावि तथापि स्मृत्यन्तरोक्तविशेषदर्शनेन सामान्यं विशेषे उपसंह्रियते। तदुक्तम्—

"उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कर्पटीवेषं ग्रामस्यापि प्रदक्षिणाम्" इति ।

गयेत्युपलक्षणं सिंहस्थगोदायात्रादेः । ततश्च गयाद्यर्थं गच्छतो नेतरत्रेति परिसंख्यया व्याख्यया परितोषः। इदं च श्राद्ध मत्यग्रे विशदतरमुपपादयिष्यते । सर्पिषेति केवलेन तेनैव द्विजतृप्तेरु-त्पादयितुमशक्यत्वात् । अतस्तद्युक्तं कर्तव्यमित्यर्थः । क्रियमाण-मत्र श्राद्धं नवदेवत्यं कर्तव्यम्। निर्गमे च गयायां प्रवेशे च कर्तव्यम्। तथोक्तम्—

"शरीरोपचये श्राद्धमर्थोपचय एव वा ।
पुष्ट्यर्थमिति यत् प्रोक्तं श्राद्धं पार्वणवत् कृतम्" ॥

शरीरोपचय इति तदुपचयार्थं रसायनाद्युपक्रमे तदुपचये वा जाते रसायनौषधादेः सिद्धौ जातायां वा । अर्थागमे वा जाते इति अर्थोपचये महालाभे निधिरूप्यादिलाभ इति यावत् ।

तत्र विष्णुधर्मोत्तरे—

"दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा ।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात् प्रयत्नतः" इति ।

देवर्षिसिद्धतापसादिसेवितमुदकं तीर्थमित्यभिधीयते । गो-मयादिनोपलेपो भूसंस्कारः । आदिशब्देनाशुचिद्रव्यापसारणम् । तदुक्तं मनुनाऽपि । "शुचिदेशे विविक्ते तु गोमयेनोपलिप्य च ।

शरीरोपचये इति तदुपचयार्थरसायनाद्युपचये वा जाते रसायनौषधादेः सिद्धौ जातायां वा। अर्थागमे वा जात इति। अर्थोपचये महालाभे निधिरूप्यादिलाभ इति यावत्।

तत्र विष्णुधर्मोत्तरे—

"दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात् प्रयत्नतः" इति।

देवर्षिसिद्धतापसादिसेवितमुदकं तीर्थमित्यभिधीयते। गोमयादिनोपलेपो भूसंस्कारः। आदिशब्देनाशुचिद्रव्यापसारणम्। तदुक्तं मनुनाऽपि—

"शुचिदेशे विविक्ते तु गोमयेनोपलिप्य च।
दक्षिणाप्रवणे चैव प्रयत्नेनोपपादयेत्॥
कृमिकीटाद्युपहतं देशं श्राद्धे विवर्जयेत्"।

तथा मार्कण्डेयः—

"वर्ज्या जन्तुमयी रूक्षा क्षितिर्दुष्टा तथाऽग्निना।
अनिष्टदुष्टशब्दोग्रा दुर्गन्धा श्राद्धकर्मणी"ति।

तदाह दक्षः—

"अमृत्तकृमिहतं क्लिन्नं संकीर्णानिष्टगन्धकम्।
देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणी"ति॥
क्लिन्नं सम्पृक्तं सङ्कीर्णमन्यैः सङ्कीर्णम्।

तथा शङ्खः—

"गोगवाश्वादिपृष्ठेषु कृत्रिमायां तथा भुवि।
न कुर्याच्छ्राद्धमेतेषु परक्यासु च भूमिषु" इति।

कृत्रिमायां वेदिकादौ, पारक्यासु परपरिगृहीतासु । ताश्च गृह-गोष्ठारामादयः न पुनस्तीर्थादिस्थानानि ।

आदिपुराणे च—

"अटवी पर्वताः पुण्या नदीतीराणि यानि च ।
सर्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रह" इति ।
"वनानि गिरयो नद्यस्तीर्थान्यायतनानि च ।
देवाखातं च गर्ताश्च न स्वामी तेषु विद्यते" इति ।

अथ श्राद्धप्रदेशाः। तीर्थक्षेत्रविशेषेषु कृतं श्राद्धमतिशयफलदं भवतीत्यवसीयते ।

तथाच व्यासः—

"पुष्करेष्वक्षयं श्राद्धं जपहोमतपांसि च ।
महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले" ॥

तथा देवलः—

"श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती ।
कुरुक्षेत्रं प्रयागं च नैमिषं पुष्कराणि च ॥
नदीतटेषु तीर्थेषु वनेषु पुलिनेषु चे"ति ।

शङ्खः—

"गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्मदाबाहुदातीरे च भृगुतुङ्गे हिमालये ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
सन्निहत्यां गयायां च दत्तमक्षयतां व्रजेत् ॥

याश्च सङ्गमे श्रीपर्वते कालोदके उत्तरमानसे वड़वायां सप्तर्षौ विष्णुपादस्वर्गमार्गप्रदेशे गोदावर्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रुतीरे चन्द्रभागायामैरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे मानसे चैवमादिष्वन्येषु तीर्थेषु सरिद्वरासु सङ्गमेषु प्रभवेषु पुलिनेषु प्रस्रवणेषु पर्वतनिर्झरेषु वनेषु वनोपवनेषु च गोमयेनोपलिप्तेषु गृहेषु मनोज्ञेषु चेति । अत्र पितृगाथा भवति—

"कुलेऽस्माकं स जन्तुः स्यात् यो नो दद्याज्जलाञ्जलीन् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नः कुर्यात् समाहितः ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्" ॥

गयाशीर्षप्रमाणं चादिपुराणेऽभिहितम् ।

"पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।
महानद्याः पश्चिमेन यावद् गृध्रेश्वरो गिरिः ॥
उत्तरे ब्रह्मकुण्डस्य यावद्दक्षिणमानसम् ।
एतद् गयाशिरो नाम त्रिषु लोकेषु विश्रुतम्" इति ।

तथा—

"द्रोणीवाटनदीधारा सरः शोणनदं तथा ।
द्वारिका कृष्णतीर्थं च तथाऽर्बुदसरस्वती ॥
नदी मणिमती नाम तथा च गिरिकर्णिका ।
धूतपापं तथा तीर्थं समुद्रो दक्षिणस्तथा ॥

गोकर्णं गजकर्णं च तथा च पुरुषोत्तमः ।
एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते ।
अर्जुनं त्रिसुरेशं च सिद्धेश्वरमतः परम् ॥
श्रीशैलं शङ्करं तीर्थं नरसिंहमतः परम् ।
महेन्द्रं च तथा पुण्यं तथा श्रीरङ्गसंज्ञितम् ॥
तुङ्गभद्रा नदी पुण्या तथा भागीरथी सरित् ।
रामेश्वरं कृष्णावेणा कावेरी वञ्जुला नदी ।
सेतुबन्धं तथा तीर्थं यत्र रामेश्वरो हरिः ॥
नदी गोदावरी नाम त्रिसन्ध्या तीर्थमुत्तमम् ।
कायावरोहणं नाम यत्र चर्मण्वती नदी ॥
तीर्थं त्रैयम्बकं नाम सर्वतीर्थमहत्फलम् ।
गोमती बहुला तद्वत् तीर्थं मानसरोवरम्" इति ।

इति श्राद्धदेशाः ।

## अथ निषिद्धदेशा अभिधीयन्ते।

तत्र विष्णुः—

"चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
स म्लेच्छदेशो विज्ञेय आर्यावर्तस्ततः परम् ॥
ततश्च म्लेच्छदेशो वर्ज्य इति सूचितम् ।
"म्लेच्छदेशे तथा रात्रौ सन्ध्यायां च विशेषतः ॥
न श्राद्धमाचरेत् प्राज्ञो म्लेच्छदेशं न च व्रजेत्" ।

इति शङ्खस्मरणात् । तथा तत्र वृत्त्यनुसन्धानेन गमने दोषोऽ

पि स्मर्यते । यथा—

"सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गाद्यान् गत्वा संस्कारमर्हती"ति ॥

पुनःसंस्कार कर्मणि ये ग्राह्या धर्मा ये च त्याज्यास्तेऽभिहिताः—

"मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
निवर्तन्ते द्विजातीनां पुनः संस्कारकर्मणी"ति ॥

देशान्तरगमननिषेधो दृष्टार्थ एव निषिध्यते नादृष्टार्थस्तीर्थयात्रानिबन्धनः ।

"दृष्टार्थगमने दोषस्तीर्थाद्यर्थं न दुष्यति ।
न जातु देशदोषोऽस्ति तीर्थे क्षेत्रे च दैवते" इति स्मरणात् ।

अत एवाहुर्महर्षयः—

"कीकटेषु गया पुण्या पुण्यं राजगृहं वनमि"ति ।

वायुपुराणे—

"त्रिशङ्कुं वर्जयेद्देशं सर्वं द्वादशयोजनम् ।
उत्तरेण महानद्या दक्षिणेन तु कीटकान् ॥
देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः" इति ।

तथा —

"कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरतस्तथा ।
प्रणष्टश्राद्धकर्माणो देशा वर्ज्याश्च यत्नतः" ॥

प्रनष्टं श्राद्धकर्म येषु देशेषु ते प्रनष्टश्राद्धकर्माणः ।

"सङ्कीर्णानिष्टशब्दां च जन्तुव्याप्तां सकर्दमाम् ।
पूतिगन्धां तथा भूमिं वर्जयेच्छ्राद्धकर्मणि" ॥

रुदिताक्रन्दिताश्लीलाद्यनिष्टः शब्दो यस्मिन्देशे सा भूमिरनिष्टशब्देति कथ्यते ।

यमः—

"गोगजाश्वादिपृष्ठेषु कृत्रिमायां तथा भवि ।
आपद्यपि च कष्टायां न कुर्यात्पितृतर्पणम्" ॥

गवाश्वादिपृष्ठेष्विति तद्युक्तरथेषु । अग्नौ तिष्ठतीतिवत्तत्रासम्भवात् । पितृतर्पणं श्राद्धकर्म । कृत्रिमा द्वित्र्यादिभूमिः । तथा परभूमिषु अनिषिद्धास्वपि श्राद्धं नानुष्ठेयम् ।

"पारक्यभूमिभागे तु पितॄणां निर्वपेत्तु यः ।
तद्भूमिपितृभिः सर्वं तस्य कर्म विहन्यते" ॥

तस्य श्राद्धकर्तुः तद्भूमिस्वामिकैः पितृभिर्विहन्यते इत्यर्थः ।

"तस्माच्छ्राद्धानि कर्माणि पुण्येष्वायतनेषु च ।
नदीषु देवखातेषु स्वभूमौ च प्रयत्नतः" ॥

ततश्चायं शास्त्रार्थः । परसत्ताकासु भूमिषु किञ्चिद्वित्तादि दत्वा स्वसत्तामापाद्य श्राद्धाद्यनुष्ठेयमिति । क्वचित्परकीयत्वमपि नास्ति तदाह संग्रहकारः—

"अटव्यः पर्वताः पुण्याः नद्यस्तीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रहः" ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलशरोरुहभ्रमरसकलभूमण्डलत्रण्डन
समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीन्म-
हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे
श्राद्धसारे देशनिरूपणम् ।

## अथ श्राद्धकालाः ।

ते चामावस्याष्टकादयः । तदाह योगी—

"अमावास्याऽष्टकाद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसङ्क्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः" इति ।

यस्यां तिथौ चन्द्रमा न दृश्यते साऽमावस्या तत्र श्राद्धं नित्यमावश्यकमिति यावत् ।

"श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः ।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यहमेव चेति"

लौगाक्षिस्मरणात् ।

इन्दुक्षयोऽमावास्या, अष्टकाश्चतस्रः मार्गशीर्षादिमासचतुष्टयापरपक्षाष्टम्यः ।

तथाऽऽश्वलायनः—

"हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका" इति ।

ननु द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्य इति वचनात्कथं चतस्रोऽष्टका इत्यभिहितं, सत्यम्, एकैकस्मिन्मासि तिस्रस्तिस्रः सम्पद्यन्ते इति द्वादशपरिपूर्तिरभ्युपेयते । अष्टमीग्रहणेन सन्निधानात्सप्तमीनवम्योर्ग्रहणम् ।

तथा च शौनकः—

"हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका" इति । अत्रापि श्राद्धमावश्यकम् ।

तथा च स्मृतिः—

"अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
वृद्धौ श्राद्धमकुर्वाणो नरकं प्रतिपद्यते" इति

वृद्धिः पुत्रजन्मादि ।

"वृद्धौ न तर्पिता येन देवता गृहमेधिभिः ।
तद्धीनमफलं ज्ञेयमासुरो विधिरेव स" इति शातातपस्मरणात् ।

कृष्णपक्षोऽपरपक्षः । तत्रैकतिथिपक्षेऽपि अमायां पृथगेवेति । इदमपि नित्यम् ।

"शाकेनापि नापरपक्षमति क्रामेदि"ति श्रुतेः ।

अयनद्वयं दक्षिणायनमुत्तरायणं च । अत्रापि श्राद्धं नित्यम् ।

तदुक्तं विष्णुपुराणे पराशरेण—

"उपप्लवे चन्द्रमसो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं रहस्तदेतन्मुनयो वदन्ति" ॥

अत्र पानीयमप्यत्रेति वचनैकदेशादयनश्राद्धस्य नित्यताऽवसिता ।

"ग्रहोपरागे च सुते च जाते पित्र्येऽप्यमायामयनद्वये च ।
नित्यं च शङ्खे च तथैव पद्मे दत्तं भवेन्निष्कसहस्रतुल्यम्"

इति जातूकर्ण्यस्मरणात् । तस्मादयनद्वये श्राद्धं नित्यम् । द्रव्यं कृसरमाषादि । ब्राह्मणः श्रुताध्ययनसम्पन्नः स च वक्ष्यमाणलक्षणः तयोः सम्पत्तिलाभो यस्मिन् काले स तथोक्तः । विषुवत् मेषतुलासङ्क्रान्ती, सूर्यसङ्क्रमः सूर्यस्य राशेः राश्यन्तरप्राप्तिः । सूर्यसङ्क्रमशब्देन अयनविषुवतोर्ग्रहणे सिद्धेऽपि

शिष्टाख्यापनाय पुनर्ग्रहणम् । ब्राह्मणा आयाता वसिष्ठोऽप्यायात इतिवत् पृथगुपादानं न पौनरुक्त्याय । योगविशेषो व्यतीपातः

"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः ।
यद्यमा रविवारेण व्यतीपातः स उच्यते" ॥

नागदैवतमाश्लेषा । मस्तकं मृगशिरः । यद्यमा रविवारेण श्रवणादिनाऽन्यतमनक्षत्रेण युक्ता स व्यतीपात इत्यर्थः । इदमस्माभिर्दानखण्डे विस्तरेण प्रतिपादितम् । गजच्छाया पारिभाषिकी ग्राह्या न मुख्या, कालप्रक्रमात् । पारिभाषिकत्वं च—

"यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणीया च गजच्छाया प्रकीर्तिता" ।

पितृदेवत्यं मघानक्षत्रं, हंसः सूर्यः करे हस्तनक्षत्रे वर्तमानः, इन्दुश्चन्द्रमाः पितृदेवत्ये च मघाख्ये नक्षत्रे स्याद्याम्या त्रयोदशी एतत्त्रयसंयोगात् गजच्छायेति । पुराणान्तरेऽप्येतदेव दर्शितम् ।

"हंसे हस्तस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैश्रवणी नाम सा छाया कुञ्जरस्य तु" इति ।

ग्रहणं चन्द्रसूर्योपरागः । यदा कर्तुः श्राद्धं प्रति रुचिर्भवति सोऽपि श्राद्धकालः । च शब्दाद्युगादिमन्वादि वैधृतिप्रभृतीनां ग्रहणम् । अत्रापि कालविशेषः श्राद्धाङ्गतयोपादेयः ।

तदुक्तं वृद्धवसिष्ठेन—

"त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः" इति ।

तथाऽऽह यमः—

“आषाढ्यामथ कार्तिक्यां माघ्यां त्रीन् पञ्च वा द्विजान् ।
तर्पयेत्पितृपूर्वन्तु तस्य चाक्षयमुच्यते ॥
राहुग्रस्ते तथा सूर्ये यस्तु श्राद्धं च कारयेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे” इति ।

यद्यपि सूर्यग्रहे नाद्यादिति ग्रहणे भोजननिषेधः स्मर्यते तथापि दातुरभ्युदय एवेति ।

विष्णुधर्मोत्तरे मार्कण्डेयः—

“आश्विनस्यापरे पक्षे प्रथमे कार्तिकस्य च ।
यस्तु श्राद्धं सदा कुर्यात् सोऽश्वमेधफलं लभेत्” ॥

सदेत्यालस्यरहितः । तथा देवलः—

“तृतीया रोहिणी युक्ता वैशाखस्यासिता तु या ।
मघाभिः सहिता कृष्णे नभस्ये तु त्रयोदशी ॥
तथा शतभिषग्युक्ता कार्तिके नवमी तथा ।
इन्दुक्षयो गजच्छाया वैधृतेषु युगादिषु ॥
श्राद्धकालाः समुद्दिष्टाः पितॄणां तृप्तिवर्द्धनाः” इति ।

मात्स्ये—

“वैशाखस्य तृतीया तु नवमी कार्त्तिकस्य तु ।
माघे पञ्चदशी चैव नभस्ये च त्रयोदशी ॥
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः” इति ।

विष्णुधर्मोत्तरे सुमन्तुः—

“वैशाखशुक्लस्य च या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।

नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥
उत्पद्यते चन्द्रमसो रवेर्वा तिस्रोऽष्टका अप्ययनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः॥
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत्पितरो वदन्ति" ।

नभस्यो भाद्रपदः । उपप्लवे उपरागे, राहुदर्शन इति यावत् । तिस्र इति सप्तम्यादितिथित्रयाभिप्रायेण मार्गशीर्षादिमासत्रयाभिप्रायेण च, तथात्वे चतुर्णामपरपक्षाणामित्यनेन विरोधः स्यात्। ततश्चात्र तिस्र इति वीप्सा द्रष्टव्या । पानीयग्रहणं श्राद्धस्यावश्यकत्वं द्योतयति । समाः सहस्रं वर्षसहस्रमित्यर्थः । पञ्चदशी माघस्येह युगादितयाऽभिहितपञ्चदशीशब्दसाधारण्येऽपि च सति कृष्णत्रयोदशीसन्निकर्षात् युगादिर्माघामावास्यैव युक्ता, माघ्यपि पुण्यैवोक्ता वाक्यान्तरेण युगादिर्न भवत्येव "माघी चेन्मघायुक्ता स्यात्तस्यां श्राद्धं कृत्वा पूतो भवती"ति विष्णुस्मरणात् । पौर्णमासीत्वोपाधिना श्राद्धकालत्वे सिद्धेऽपि मघा-तिलग्रहणं फलातिशयार्थं निकृष्टाया अपि श्राद्धकालत्वात् । तथा—

"पौर्णमास्यां व्यतीपातेष्वष्टकासु विशेषतः ।
एषु श्राद्धमकुर्वाणो नरकं प्रतिपद्यत" इति ।

एवमनयैव दिशा गुणान्तरसम्बन्धेऽप्यूहनीयम् ।

तथा विष्णुपुराणे—

"मघौ सिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितॄणां नैवाल्पपुण्यैर्नृप लभ्यतेऽसौ ॥
काले धनिष्ठा यदि नाम तत्र भवेत्तु भूपाल तदा पितृभ्यः।

दत्तं जलान्नं च ददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥
तत्रैव चेद्भाद्रपदा च पूर्वा काले तदा यत् क्रियते पितृभ्यः ।
श्राद्धं परां तृप्तिमुपेत्य ते च युगं समग्रं पितरः स्वपन्ति ॥
वारुणं शतभिषा नक्षत्रम् , अमावास्या इन्दुक्षयात् पुण्या,
युगादित्वात्पुण्यतरा नक्षत्रयोगाच्च पुण्यतमेति ॥

तथा—

"अयने षडशीतौ च चन्द्रसूर्यग्रहे तथा ।
युगादौ वैधृतौ चैव दत्तं भवति चाक्षयम्" ॥

अयने षडशीतौ चेति चशब्देन विष्णुपदानां ग्रहणम् । षडशीति विष्णुपद्योर्लक्षणमाह—

"कुम्भालिगोहरिषु विष्णुपदं वदन्ति स्त्रीचापमीनमिथुने षडशीतिरेव" ।

अलिः वृश्चिकः, गौर्वृषभः, हरिः सिंहः, स्त्री कन्या, चापं धनुः, स्पष्टमन्यत् । श्लोके युगादिग्रहणं मन्वादीन् लक्षयति मन्वादींश्च ।

मत्स्यपुराणे—

"आश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी सिता ।
तृतीया चैत्रमासस्य सिता भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैते कर्तुश्चाक्षयकारकाः" इति ।

श्रावणात्पूर्वं सर्वत्र शुक्लपदमनुषज्यते। श्रावणादारभ्य यत्र यथोक्तं तत्तथेति। कर्त्तुरिति श्राद्धादेरित्यर्थः। युगादिविषये विशेषः—

"द्वे शुक्ले द्वे तथा कृष्णे युगाद्याः कवयो विदुः।
शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके" इति।

कृत्तिकादिनक्षत्राणि काम्यः श्राद्धकालः।

तथा च योगीश्वरः—

"स्वर्गं ह्यपत्यं मोक्षं च शौर्यं क्षेत्रं बलं तथा।
पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम्॥
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि।
अरोगित्वं यशो वीतशोकतां परमां गतिम्॥
धर्मं विद्यां भिषक्सिद्धिं कुप्यं गां चाप्यजादिकम्।
अश्वानायुश्च विधिवत् यः श्राद्धं सम्प्रयच्छति॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान्" इति।

तथा च विष्णुः—

"स्वर्गं कृत्तिकासु, अपत्यं रोहिणीषु, ब्रह्मवर्चसं सौम्ये, रौद्राणां सिद्धिं रौद्रे, भुवं पुनर्वसौ, पुष्टिं पुष्ये, श्रियं सार्पे, सर्वान् कामान् पित्र्ये, सौभाग्यं भागे, धनमार्यम्णे, ज्ञातिश्रैष्ठ्यं हस्ते, रूपवतः सुतांस्त्वाष्ट्रे, वाणिज्यसिद्धिं स्वातौ, कनकं विशाखासु, मित्राणि मैत्रे, शाक्रे राज्यं, कृषिं मूले, समुद्रयानसिद्धिमाप्ये, सर्वान्कामान्वैश्वदेवे, श्रैष्ठ्यमभिजिति, सर्वान् कामान् श्रवणे, बलं वासवे, आरोग्यं वारुणे, कुप्यद्रव्यमाजे, गृहमहिर्बुध्न्ये, गाः पौष्णे, तुरङ्गमाश्विने, जीवितं याम्य" इति। तथा रव्यादयो वाराः का-

म्यश्राद्धकालाः । तदुक्तं विष्णुना—

"सन्ततिमादित्येऽह्नि श्राद्धं कुर्वन्नाप्नोति सौभाग्यं चन्द्रे समा विजयं कुजे सर्वान् कामान् बुधे विद्यामभीष्टां जैवे धनं शौक्रे जीवितं शनैश्चरे" ।

तथा विष्णुधर्मोत्तरे—

"अतः काम्यानि वक्ष्यामि श्राद्धानि तव पार्थिव ॥
आरोग्यं सर्वसौभाग्यं समरे विजयं तथा ॥
सर्वान् कामान् तथा विद्यां धनं जीवितमेव च ।
आदित्यादिदिनेष्वेव श्राद्धं कुर्वन् सदा नरः ।
क्रमेणैतत्समाप्नोति नात्र कार्या विचारणेति" ॥

तथा कूर्मपुराणे—

"आदित्यवारे त्वारोग्यं चन्द्रे सौभाग्यमेव च ।
कुजे सर्वत्र विजयं सर्वान् कामान् बुधेन तु ॥
विद्यां विशिष्टां च गुरौ धनं वै भार्गवे पुनः ।
शनैश्चरे लभेदायुरारोग्यं च सुदुर्लभम्" इति ।

तथा प्रतिपदादितिथीनामपि काम्यश्राद्धकालत्वम् ।

तदुक्तं मनुना—

"कुर्वन् प्रतिपदि श्राद्धं सुरूपान् विन्दते सुतान् ।
कन्यकां तु द्वितीयायां तृतीयायान्तु बन्दिनः ॥
पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्यूतं कृषिं चैव सप्तम्यां लभते नरः ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ।

नवम्यामेवैकखुरं दशम्यां द्विशफं बहु ॥
एकादश्यां तथा रौप्यं ब्रह्मवर्चस्विनः सुतान् ।
द्वादश्यां जातरूप्यं च रजतं कुप्यमेव च ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः ॥
प्रीयन्ते पितरश्चास्य ये शस्त्रेण रणे हताः ।
श्राद्धदः पञ्चदश्यां तु सर्वान्कामान् समश्नुते"। कात्यायनः—

"अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि, द्वितीयायां स्त्रीजन्म, अश्वास्तृतीयायां, चतुर्थ्यां क्षुद्रपशवः, पुत्राः पञ्चम्यां, द्यूतं षष्ठ्याम्, कृषिः सप्तम्यां, वाणिज्यमष्टम्यामेकशफं नवम्यां, दशम्यां गावः, परिचारका एकादश्यां, धनधान्यर्ठ० हिरण्यं द्वादश्यां, ज्ञातिश्रैष्ठ्यं त्रयोदश्यां, युवानस्तत्र म्रियन्ते शस्त्रहताश्चतुर्दश्याममावास्यायां सर्वमि"ति ।

तथा याज्ञवल्क्योऽपि—

कन्यां कन्यावेदिनश्च पशून् वै तत्सुतानपि ।
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफं तथा ॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामान् प्राप्नोति श्राद्धदः सदा ॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते" ।

कन्यावेदिनो जामातरः। एतानि फलानि कृष्णपक्षप्रतिपदिप्रभृतिष्वमावास्यापर्यन्तानि । अयं तिथिषु श्राद्धविधिर्न सर्वेष्वपरपक्षेषु किंतु भाद्रपदापरपक्ष एव ।

"प्रौष्ठपदाद्यपरपक्षे मासि चैव मि" ति शौनकस्मरणात्। तथाऽऽपस्तम्बोऽपि—

"सर्वेष्वेवापरपक्षेषु श्राद्धे क्रियमाणे पितॄणां प्रीतिः, कर्तुस्तु कालनियमात्फलविशेषः। प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते, द्वितीये स्तैणाम्, तृतीये ब्रह्मवर्चसं, चतुर्थे क्षुद्रपशवः, पञ्चमे पुमान्, षष्ठेऽध्वशीलोऽक्षशीलश्च, सप्तमे कृषेराप्तिः, अष्टमे पुष्टिः, नवमे एकखुरम्, दशमे व्यवहारसिद्धिः, एकादशे कृष्णायसं त्रपुसीसं, द्वादशे पशुमान्, त्रयोदशे बहुमित्रो दर्शनीयापत्यो भवति, चतुर्दशे आयुधसिद्धिः, पञ्चदशे पुष्टिः" ।

नभस्ये कृष्णपक्षप्रतिपत्प्रभृति पञ्चदश दिनानि कृत्स्नशोऽपि पक्षः कन्यागते सवितरि महालय इत्युच्यते। तत्र च श्राद्धं पार्वणविधिनैव कर्तव्यम्। तदुक्तं वृद्धमनुना—

"नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः।
स महालयसंयुक्तो गजच्छायाह्वयस्तथा" इति ।
"नभस्यस्यापरे पक्षे तिथिषोडशकं तु यत्"

इति शाङ्खायनवचनं दिनवृद्ध्यभिप्रायेण, अन्यथा तस्य त्याज्यत्वापत्तेः। अथवा प्रदिपदमारभ्य प्रतिपदि समाप्तिः, प्रतिपदोऽपि नष्टचन्द्रत्वात्। अथवा पौर्णमास्यामारभ्यामायां समाप्तिरिति। ततश्च द्वादशकपालेषु अष्टाकपालवत् षोडशदिवसेषु पञ्चदशदिनवचनमवयुत्यनुवादो भविष्यति। अथवा पञ्चदशषोडशदिनयोर्विकल्पः। कन्यास्थार्कः प्राशस्त्यायैव—

"कन्यागते सवितरि श्राद्धं कुर्वीत सर्वथा।

आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्मणि"

इति जाबालिस्मरणात् ।

"पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमे दत्वा श्राद्धं कामांश्च पुष्कलान्"

इति षट्त्रिंशन्मतवचनात् । दर्शग्रहणं शुक्लकृष्णैकादश्योरुपलक्षणार्थम् ।

"श्राद्धविघ्ने समुत्पन्ने त्वविज्ञाते मृतेऽहनि ।
एकादश्यान्तु कुर्वीत कृष्णपक्षे विशेषत"

इति मरीचिस्मरणात् ।

अत्रैवमन्वयः—या कृष्णपक्षनिष्ठैकादशी तस्यां विशेषतः कर्तव्यमिति, यतः पितृकार्ये कृष्णपक्षस्यैव विशेषेण प्राशस्त्यात् । कृष्णैकादशीतोऽपि अमावास्यायां फलविशेषः श्रूयते । मार्कण्डेयः—

"प्रतिपद्धनलाभाय द्वितीया हि प्रजाप्रदा ।
वरार्थिनी तृतीया च चतुर्थी शत्रुनाशिनी ॥
श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यो भवेन्नरः ।
गणाधिपत्यं सप्तम्यामष्टम्यां बुद्धिमुत्तमाम् ॥
शिवं नवम्यां प्राप्नोति दशम्यां पूर्णकामताम् ।
वेदांस्तथाऽऽप्नुयात् सर्वान् एकादश्यां क्रियापरः ॥
द्वादश्यां हेमलाभं तु प्राप्नोति पितृपूजकः ।
प्रज्ञां मेधां पशुं पुष्टिं स्वातन्त्र्यं वृद्धिमुत्तमाम् ॥
दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीम् ।
अवाप्नोति न सन्देहः श्राद्धे श्राद्धपरो नरः ॥

युवानः पितरो यस्य मृताः शस्त्रेण वै हताः ।
तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सताम् ॥
श्राद्धं कुर्वन्नमावास्यां यत्नेन पुरुषः शुचिः ।
सर्वान् कामानवाप्नोति स्वर्गे वासं समश्नुते" ॥

तत्र वर्ज्यानाह—

"नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्" ।

वृद्धगार्ग्यः—

"प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा ।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति" ॥

प्राजापत्यं रोहिणी, पौष्णं रेवती, पित्र्यर्क्षं मघा ।

तथा—

"त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम्" इति ।

एतत् श्राद्धं सूतिकादिना मुख्यकालातिक्रमे त्वाशौचापगमानन्तरं कार्यम् । तदुक्तमृष्यशृङ्गेण—

"देये पितॄणां श्राद्धे तु आशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते" ।

अत्रात्रिः—

"तदहश्चेत्प्रदुष्येत केनचित्सूतकादिना ।
सूतकानन्तरं कुर्यात्पुनस्तदहरेव चे"ति ।

अत्र च पक्षद्वयमभिहितं सूतकानन्तरं कालान्तरं च ।

अन्यस्मिन्पक्षे वा तत्तिथौ वेति। तत्र प्रथमपक्षस्त्वविरुद्ध एव। पुनस्तदहरेवेति पक्षविहितं सूतकव्यतिरिक्तनिमित्तान्तरोत्पन्ने विघ्ने प्रतिमासं क्षयाहविहितैकोद्दिष्टमासिकश्राद्धविषयमिति पूर्वोक्तवचनाविरुद्ध इति व्यवस्था ज्ञाप्यते।

"एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते।
अन्यस्मिंस्तत्तिथौ तस्मिन् श्राद्धं कुर्याद्यथाविधि"

इति देवलस्मरणात्।

अन्यस्मिन्नन्तरे मासि तत्तिथौ मृतितिथौ यस्मिन शुक्ले कृष्णे वा मृतस्तस्मिन्पक्षे, श्राद्धं विघ्नवशादतिक्रान्तं कुर्यादित्यर्थः। आशौचनिमित्तेन विघ्ने जाते मासिकं श्राद्धमपि सूतकानन्तरमेव वचनबलादनुष्ठेयम्। देवस्वामी च एवमेव व्यवस्थां कृतवान्।

यत्तु व्यासेनोक्तं—

"श्राद्धविघ्ने समुत्पन्ने त्वन्तरा मृतसूतके।
अमावास्यां प्रकुर्वीत शुद्धावेके मनीषिणः"।

अन्तरा मृतसूतके श्राद्धप्रयोगमध्ये पाकोपक्रमात् प्राक् मृतके सूतके वा जाते अमावास्याम् अमावास्यायां शुद्धौ शुद्ध्यनन्तरं वा अनुष्ठेयमिति, इदमपि अनुमासिकसांवत्सरिकश्राद्धविषयम्।

"मासिकेऽब्दे तु सम्प्राप्ते त्वन्तरा मृतसूतके।
वदन्ति शुद्धौ तत्कार्यं दर्शे वाऽपि विचक्षणाः"

इति षट्त्रिंशन्मतवचनात्। दर्शग्रहणन्तु शुक्लकृष्णैकादश्योरुपलक्षणार्थम्,

"श्राद्धविघ्ने समुत्पन्ने त्वविज्ञाते मृतेऽहनि ।
एकादश्यान्तु कर्तव्यं कृष्णपक्षे विशेषतः"
इति मरीचिस्मरणात् ।

अत्रैवमन्वयः । कृष्णपक्षनिष्ठा या एकादशी तस्यां विशेषतः कर्तव्यमिति । पितृकार्येषु कृष्णपक्षस्यैव विशेषेण ग्राह्यत्वात् । कृष्णैकादशीतोऽपि अमावस्याया मुख्यत्वं पितृकार्येषु दण्डापूपन्यायसिद्धं बोध्यम् । अयमाशयः—सर्वथा ह्याशौचसमनन्तरकालो मुख्यः कालः स एव सन्निकृष्टत्वेन ज्यायान्, अमावास्याकालस्तु जघन्यः, मुख्यकालप्रत्यासत्त्यभावात् । अनेनैवाभिप्रायेणोक्तवा नृष्यशृङ्गः—

"शूचीभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्तव्या न चान्या वै कथञ्चन" इति ।

ततश्चायं तात्पर्यार्थः—शुद्धस्य श्राद्धानुष्ठेयता आवश्यकी । तत्राशौचवशात् मुख्यकाले शुद्ध्यसंभवेऽशुद्ध्यनन्तरं या तिथिः प्रतिपद्येत सा तिथिस्तस्य कर्मणोऽङ्गतया उपादेया । अन्या मुख्या तिथिः कदाचिदपि नोपादेया । आशौचादूषिता तु मुख्या तिथिः सदाऽनुष्ठेया—

"तिथिच्छेदो न कर्त्तव्यो विनाऽऽशौचं यदृच्छया ।
पिण्डं श्राद्धं च दातव्यं विच्छित्तिं न च कारयेदि"ति स्मरणात् । चकारो ह्यग्नौकरणसमुच्चयार्थः । ब्राह्मणतर्पणमात्रमत्र-श्राद्धशब्दाभिधेयम् पिण्डदानस्य पृथगुपादानात् ।

वस्तुतस्तु ब्राह्मणभोजनपिण्डदानहोमसमुदायस्य श्राद्धशब्दा-

भिधेयत्वम् , एकैकस्मिन् श्राद्धशब्दस्यौपचारिकत्वात् । विच्छित्तिं च न कारयेदित्यस्यायमर्थः । ब्राह्मणभोजनस्य कर्तुमसामर्थ्ये तत्र पिण्डदानमात्रमपि कर्तव्यम् । सर्वथाऽपि कर्मविच्छेदो न कर्तव्य इति । तथा च निगमः—

"आहिताग्नेः पित्रर्चनं पिण्डै रेव ब्राह्मणानपि वा भोजयेदि"ति । अत्र व्यवस्थावाचको वाशब्दः । व्यवस्था चैतादृशी—सत्यां शक्तौ ब्राह्मणतर्पणपिण्डदानेऽनुष्ठेये, अशक्त्या तु पिण्डदानमात्रमिति ।

इति श्रीमल्लक्ष्मीनृसिंह चरणयुगलसरोरुहभ्रमरसकल भूमण्डलमण्डन समस्तयवनाधीश्वर श्री निजामसाह समस्तराज्यधुरन्धर श्रीमन्महाराजाधिराज श्री दलपतिराजविरचिते श्री नृसिंहप्रसादे श्राद्धसारे श्राद्धभेदादिनिर्णयः ।

अथ गन्धादीनां निर्णयः

विष्णुः—

"चन्दनकर्पूरकुङ्कुमनागरपद्मकान्यनुलेपनाय" इति । दद्यादिति शेषः ।

तत्र मरीचिः—

"कर्पूरकुङ्कुमोपेतं सुगन्धं सितचन्दनम् ।
दैविके त्वथवा पित्र्ये गन्धदाने प्रशस्यते"

मार्कण्डेयः—

"चन्दनागुरुकर्पूरकुङ्कुमानि प्रदापयेत् ।
अश्वमेधमवाप्नोति पितृणामुपलेपनात्" ।
तस्मात्सुरभि चन्दनं देयम् ।

तथा च स्मृत्यन्तरम्—

"नागन्धं न दुर्गन्धं न कृष्णां नात्यल्पं च दद्यादि"ति विष्णुः।

ब्रह्मपुराणे—

"श्वेतचन्दनकर्पूरचन्दनानि शुभानि च।
विलेपनार्थं दद्यात्तु यच्चान्यत् पितृवल्लभम्" इति।

भृगुः—

"सपवित्रेण हस्तेन दद्याद्गन्धानुलेपनम्।
एकवासाश्च यो दद्यात् निराशाः पितरो गताः" इति।

ब्राह्मणानामपि कश्चिन्नियमः—

"ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्" इति।

पुण्ड्रनिषेधस्तु तिर्यक् पुण्ड्रविषयः, नोर्ध्वपुण्ड्रविषयता तस्य कल्पयितुं शक्या, तस्य सर्वदा विहितत्वात्। प्रतिपादितमेतन्नित्यप्रकरणे सम्यक्तया।

तथा श्राद्धदेशे श्वमार्जारकुक्कुटशूद्रपतितव्यङ्गोन्मत्ताचारहीनकृष्णाविककृष्णायसरक्तवासांसि दूरतो निःसारयेदिति।

अथ पुष्पाणि।

अत्र पद्मोत्पलानि शुक्लेतराण्यपि देयानि। अत्र विष्णुः—"जलजानि रक्तान्यपि दद्यात्"। तदुक्तं ब्रह्माण्डपुराणे—

"शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च।
गन्धवर्णोपपन्नानि यानि चान्यानि कृत्स्नशः" इति।

मार्कण्डेयः—

"जातौ च सर्वदा देया मल्लिका श्वेतयूथिका ।
जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम्" ।

एवं तुलसीविषये—

"पितृपिण्डार्चनं श्राद्धे यैः कृतं तुलसीदलैः ।
प्रीणीताः पितरस्तेन यावच्चन्द्रार्कमेदिनि" ॥

अत्र जातीकुसुमं न देयम् ।

"न जातीकुसुमानि दद्यान्न कदलीपत्रमि"ति अङ्गिरसा निषेधाभिधानात् ।

तथा क्रतुरपि निषेधति—

"असुराणां कुले जाता जाती पूर्वपरिग्रहे ।
तस्या दर्शनमात्रेण निराशाः पितरो गता" इति ।

अत्र जातीकुसुमनिषेधो वैकल्पिक इति ज्ञेयम्, क्रतुषु निषेधो मार्कण्डेये विधिः । अतो विहितप्रतिषिद्धत्वाद्विकल्प एव न्याय्यः । तानि पुष्पानि करवीरव्यतिरिक्तानि, करवीराणां निषेधात् । तथा च स्मरन्ति शिष्टाः—

"तुलसीं भृङ्गराजं शमीपत्रं कुशपत्रं पुष्पादीनि च दद्यात्
करवीराणि न दद्यात्" इति ।

तत्र वर्ज्यानाह विष्णुः—

"उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च ।
पुष्पाणि वर्जनीयानो रक्तवर्णानि यानि च" ।

चैत्यवृक्षोद्भवानि श्मशानदेशवृक्षोद्भवानि ।

अत्र रक्तवर्णनिषेधो जलजव्यतिरिक्तविषयः ।

"जलोद्भवानि देयानि रक्तान्यपि विशेषतः" इति वचनात् ।

"वर्जयेद्दुर्गन्धानि कण्टकजातानि रक्तानि पुष्पाणि च सितानि सुगन्धीनि कण्टकजातान्यपि दद्यादि"ति विष्णुस्मरणाच्च ।

तथा मत्स्यपुराणेऽपि—

"पद्मबिल्वार्कधत्तूरपारिभद्राटरूषकाः ।
न देयाः पितृकार्येषु पयश्चाजाविकं तथा" ।

पारिभद्रो मन्दारः । आटरूष आढरूषः ।

"मयूरकाण्डध्वनिका राजमाषकुसुम्भिका ।
पद्मबिल्वार्कधत्तूरे"ति । काण्डध्वनिकेति वल्लीविशेषः ।

अथ धूपः ।

विष्णुधर्मोत्तरे—

"धूपो गुग्गुलुजो देयस्तथा चन्दनसारजः ।
अगुरुश्च सकर्पूरस्तुरुष्कश्च तथैव च" ।

तुरुष्केति सुगन्धिधूपस्याभिधानम् । तुरुष्कः इमलिवृक्ष इति वा ।

"चन्दनागुरुणी चोभे तमालोशीरपत्रकम् ।
धूपे च गुग्गुलुः श्रेष्ठः तुरुष्कत्वक् तथैव च" ।

तमालो वृक्षविशेषः । उक्तमन्यत् ।

मार्कण्डेयः—

"सघृतं गुग्गुलुं धूपं पितॄणां यः प्रयच्छति ।
अश्वमेधफलं तस्य दीपदस्य तथैव च" ।

गुग्गुलुविधौ घृतग्रहणं मधुन उपलक्षणार्थम् ।

"घृताद्वा तिलतैलाद्वा नान्यद्दद्यात्तु दीपकम्" इति स्मरणात् ।

विकल्पस्तु सम्भवासम्भवाभिप्रायेण ।

तथैवाभिहितं विष्णुधर्मोत्तरे—

"धूपार्थे गुग्गुलुं दद्याद् घृतयुक्तं मधूत्कटम्" इति ।

प्राण्यङ्गधूपनिषेधस्तु विष्णूक्तः । "जीवजं च सर्वं न धूपार्थमि"ति । जीवजं कस्तूर्यादि । चन्दनकुङ्कुमकर्पूरागुरुपद्मकान्यनुलेपनार्थं इति ।

दीपविषये शङ्खः—

"घृतेन दीपो दातव्यस्तथा चान्यौषधीरसैः ।

वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्" इति ।

ओषधीरसैरित्यत्र दीर्घता छान्दसी । अन्योऽपि कश्चिद्विशेषः ।

तत्र कात्यायनः—

"तैलमुद्वर्तनं स्नानं दन्तधावनमेव च ।

कृतं रोमनखेभ्यस्तु दद्यात्तेभ्योऽपरेऽह्नी"ति ।

तत्र कर्मणः स्नानादेर्दातुमशक्यत्वात्तत्कर्मणा कर्मसाधनद्रव्यं लक्ष्यते । ततश्च स्नानसाधनं द्रव्यं देयमपि तैलमनिषिद्धतिथावेव देयम् , तत्र तैलप्रतिषेधात् । तैलस्यादेयत्वेऽपि आमलकोदकं दद्यात् । तदपि द्वादशघटीषु वृत्तासु देयम् ।

"अन्हः षट्सु मुहूर्तेषु गतेष्वथ च तान् द्विजान् ।

प्रत्येकं प्रेषयन् प्रेष्यान् प्रदायामलकोदकम्" इति मार्कण्डेयवचनात् ।

आमलकदानमपि अमावास्याव्यतिरिक्तविषयम् ।

"अमायां धात्रीफलैर्न स्नायात्" इति स्मरणात् । तत्रापि विशेषो देवलेनाभिहितः—

"तैलमुद्वर्तनं स्नानं स्नानीयं च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्यात् वैश्वदेविकपूर्वकम्" इति ।

ताम्रघटितं पात्रमौदुम्बरम् । श्राद्धकृत् नखश्मश्रुच्छेदनं न कारयेत् इति तत्तद्विषयम् ।

तथा श्राद्धदेशे च एतावती सामग्री सम्पादनीया—कुश यवतिलकांस्यमाषपार्णराजताम्रमधुपुष्पधूपदीपचन्दनभृङ्गराजश्रीतुलसीदलाऽनिषिद्धनानाजातीयसुगन्धिपुष्पकर्पूरागुरुकुङ्कुमसुगन्धिचन्दन क्षौद्र क्षौमसूत्रमेक्षण जर्तिल वृषीरूपाऽऽसन नेपालकम्बल रूप्यखड्गपात्रदौहित्रप्रभृतयः सम्पादनीयाः । मध्याह्नः अष्टममुहूर्तादपरः कालः । मुख्यतिलाभावे जर्तिलाः ।

तल्लक्षणम्—

"जर्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वनेभवाः ।
अटव्यां ये समुत्पन्नाः अकृष्टफलिनस्तथा ॥
ते वै श्राद्धे पवित्राः स्युः तिलास्ते जर्तिलास्तिलाः"

इति आपस्तम्बेन प्रशस्ततयाऽभिधानात् । निमन्त्रितब्राह्मणानामुपवेशनार्थं वृसीरूपासनानि । "कुतुपं च स वै दद्यादि"ति मनुस्मरणात् । नेपालदेशप्रभवमेषादिरोमनिर्मितः कम्बलः कुतुपः । तथा च स्मृत्यन्तरम्—

"मध्यान्हः खड्गपात्रं च तथा नेपालकम्बलम् ।

रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः" इति ।

तथा—

"श्राद्धे त्रीणि पवित्राणि दौहित्रः कुतपास्तिलाः" इति । कुं तापयतीति कुतपः ।

"पापं कुत्सितमित्याहुस्तस्य सन्तापकारकम् ।

अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः" इति स्मरणात् ।

तथा भोजनार्थमर्घ्यार्थं च पार्णराजतताम्रकांस्यपात्राणि । पर्णानि पलाशस्यैव ।

"न मृन्मयानि कुर्वीत भोजने देवपित्र्ययोः ।

पलाशेभ्यो विना न स्युः पर्णपात्राणि भोजने" इत्यत्रि स्मरणात् । अर्घ्यार्थे त्वन्यपर्णानि निषिद्धानि खादिरौदुम्बराण्यर्घ-पात्राणि ।

"अथवा मृन्मयानि स्युरपि पर्णपुटास्तथे"ति स्मरणात् ।

वस्त्राणि च ब्राह्मणार्थे कौशेयक्षौमकार्पासदुकूलानि ।

"कौशेयं क्षौमकार्पासं दुकूलमहतं तथा ।

श्राद्ध एतानि यो दद्यात् कामानाप्नोति पुष्कलान्" इति स्मृतेः । तस्मात्पूर्वोक्तदर्भादिमेक्षणान्तं द्रव्यं सम्पाद्य स्नात्वा शुक्लवस्त्रपरिधानं कुर्यात् ।

"स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि" इति,

"श्राद्धकृच्छुक्लवासाः स्यादि" ति च स्मरणात् ।

पाद्यमाचमनीयं च स प्रयच्छेद्यथाविधि" ।

कृताञ्जलिः ( पाद्यमाचमनीयं च ) स्वागतमित्युक्त्वाऽऽचमना-

र्थमुदकं दद्यात् । तत्र मार्कण्डेयः—

ततः स्नानानन्तरमेतावत्कर्म कर्तव्यमिति प्राह यमः—

"ततः स्नात्वा निवृत्तो यः प्रत्युत्थाय कृताञ्जलिः ।

"स्नातः स्नातात्समाहूतान् स्वागतानर्हयेत्पृथक् ।

स्थितो देशे विविक्ते तु प्रकीर्य तिलबर्हिषी"ति ।

अनेन प्रकारेण स्नातान् ब्राह्मणान् स्वयं च स्नातः सन्नाहूय श्राद्धं प्रारभेत् । अत्र सर्वं दैवं प्रादक्षिण्येन कार्यम् । पित्र्यं च सव्येन विना परिवेषणम् । तथा च गृह्यसूत्रकाराः—"प्रादक्षिण्येन सर्वं कार्यमानिधनात् श्राद्धं परिसमाप्ते रिति" । तथा—मनुरपि—

"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।

पित्र्यमानिधानात्कार्यं विधिवद्दर्भपाणिना" ।

अयमर्थः—पित्र्ये कर्मणि परिवेषणमन्तरेण यत् पित्र्यं तदपसव्यपितृतीर्थाभ्यामेवेति । अतन्द्रिणा अनलसेन । पित्र्यग्रहणं दैविकं सर्वमपि प्रादक्षिण्येन यज्ञोपवीतेन दैवतीर्थेन च कार्यमिति सूचयति । अत्र सर्वं श्राद्धमपसव्येनैव समापनीयतया प्राप्तं तथापि सूक्तस्तोत्रजपादि ब्राह्मणविसर्जनादि परिवेषणं च सव्येनैवानुतिष्ठेत् । तदाह जमदग्निः—

"अपसव्येन कर्तव्यं सर्वं श्राद्धं यथाविधि ।

सूक्तस्तोत्रं जपं मुक्त्वा विप्राणां च विसर्जनम्" इति ।

सूक्तं दातारो नोऽभिवर्द्धन्तामिति, तथा शिवा आपः सन्त्वित्यादि चेति स्तुतिः स्तोत्रं, सप्तव्याधा दशार्णेष्वित्यादि गयाप्रशंसा,

विसर्जनं वाजे वाजे वाजिनो न इत्यादिमन्त्रः। तथा श्राद्धारम्भे-श्राद्धभूमौ गयां ध्यात्वेत्यादि, तथा विकल्पतो दक्षिणादानमपि इत्यादि सर्वं विहायान्यत्सर्वं प्राचीनावीतिना कार्यम्। क्रतुराह—

"दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते॥
दक्षिणाप्रवणे सम्यगाचान्तान् प्रयतान् शुचीन्।
आसनेषु विविक्तेषु विप्रांस्तानुपवेशयेत्" इति।

ब्राह्मणास्तु षट् द्वौ दैवे, त्रयः पित्र्ये एको विष्णुश्चेति। समर्थोऽपि न श्राद्धे विस्तरं कुर्यात्। अत एव ब्राह्मणसंख्या मनुना दर्शिता—

"द्वौ दैवे पितृकार्ये त्रीन् एकैकमुभयत्र वा।
भोजयेत्सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्तरम्" इति।

यद्यपि न कुर्यादिति नञ्योगि आख्यातविध्यर्थश्रवणात् विस्तरनिषेधः प्रतीयते, तथापि धर्मभूयस्त्वे फलभूयस्त्वस्य न्याय्यत्वात् सत्क्रियादिदेशसम्पादनसमर्थस्य विस्तराङ्गीकरणस्य सुकरत्वात् "नहि निन्दा निन्द्यं स्तोतुमि"ति न्यायेन जर्तिलयवाग्वा वा जुहुयादित्यादिवद्विधेयलघुपक्षस्तुत्यर्थोऽयं निन्दार्थवाद इति भावः। तथा पुराणेऽपि दर्शितम्—

"पञ्चभिः पञ्चभिर्विप्रैः द्वाभ्यां द्वाभ्यामथापि वा।
श्राद्धद्वयं त्रिभिर्वा स्यादेकेनैवाथवा पुनः" इति।

अयमर्थः—वर्गद्वये अक्षरचतुष्टयाधिकसार्द्धश्लोकेन पूर्वपक्षे पृथक् दैवं विधाय द्वादशभिरक्षरैः स्तोत्रमेवाभिधीयते।

"तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।
कुर्वीत शक्तिसम्पन्नस्तन्त्रं वा वैश्वदेविकमि"ति मरीचिस्मरणात् । तथेति पितृश्राद्धधर्मातिदेशार्थतावधारणेन विकल्पे ततश्च तन्त्रमेवेत्यर्थः ।

असमर्थश्चेदेकेनापि ब्राह्मणेन श्राद्धं कुर्यात् तथाह शङ्खः-

"भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्यानुनिर्वपेत्" इति ।

ततश्च वर्गद्वयोद्देशेनैकमप्याशयेदिति तात्पर्यार्थः । तस्येति ब्राह्मणस्य । यश्चैको भोज्यः स च छन्दोग एव भोज्यः । यतो हि ऋग्यजुःसामानि तत्र वर्त्तन्ते । तत्र च पितुर्ऋचा तृप्तिः यजुषा पितामहस्य साम्ना प्रपितामहस्य । तदुक्तम्—

"ऋचा च तृप्यति पिता यजुषा च पितामहः ।
प्रपितामहस्तथा साम्ना सामगो ह्यधिकस्ततः"

इति । तथा गोभिलोऽपि—छन्दोगस्य वैकैकस्य भोज्यतामाह—

"यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते" ॥

तथाऽपरो विशेषः—

"छन्दोगं भोजयेच्छ्राद्धे वैश्वदैवे तु बह्वृचम् ।
पुष्टिकर्मण्यथाध्वर्युं शान्तिकर्मण्यथर्वणम्" इति ।

ननु एकब्राह्मणपक्षे वैश्वदेवस्थाने कथम् इत्थम्, अग्निरेव तत्र नियोज्यः ।

"एक एव यदा विप्रो द्वितीयो नोपपद्यते ।

पितॄणां ब्राह्मणो योज्यो दैवं त्वग्नौ नियोजयेदि''ति शङ्खस्मरणात् । यदा द्वौ ब्राह्मणौ तदाऽग्नौ वैश्वदेवं नियोज्य वर्गद्वयं ब्राह्मणद्वये नियोजयेत् । वैश्वदेवस्याङ्गत्वात्पैतृकस्य प्रधानत्वात् । अङ्गगुणविरोधे च तादर्थ्यादिति न्यायात् प्रधानानुरोधेनाङ्गानुष्ठेयत्वेऽपि अङ्गानुरोधेन प्रधानबाधाया अयुक्तत्वात् इति ।

ततश्चायं शास्त्रार्थः—साग्निश्चेदग्निं नियोजयेदनग्निश्चेद्दर्भमुष्टिं नियोजयेदिति ।

''एकस्मिन् ब्राह्मणे दैवे साग्निरग्निर्भवेत्सदा ।
अनग्नेः कुशमुष्टिः स्यात् श्राद्धकर्मणि सर्वतः''

इति प्रचेतसा स्मरणात् । तथा पारस्करोऽपि—

''दर्भवटुर्वेदितव्यो दैवे'' इति । दर्भवटुर्दर्भमुष्टिः । वाशिष्ठेन विशेष उक्तः—

''यद्येकं भोजयेच्छ्राद्धे दैवे तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ।
देवतायतने कृत्वा ततः श्राद्धं प्रकल्पयेत् ।
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे'' ।

प्रास्येत् प्रक्षिपेत् । ब्रह्मचारिपदं विशिष्ट—ब्राह्मणोपलक्षणपरम् । वैदिकं कर्म ब्रह्म । अनेकब्राह्मणलाभे तु श्रोत्रियं मुख्यासने नियोजयेत् । सा च तादृशी योजना परस्परं ब्राह्मणैरेव कार्या । तथोक्तं सुमन्तुना—

''विद्यातपोऽधिकानान्तु प्रथमासनमिष्यते ।
पङ्क्त्यां चैव निविष्टायां समं गन्धादिभोजनम् ।

अर्हेषु तिष्ठमानेषु अनर्हो यो व्रजेद् धुरम् ।
दुष्कृतं च हरेत्पङ्क्त्या आयुषा च वियुज्यते" ।

यमः—

"प्रायेण मूर्खः स्मृतिमन्त्रहीनो योऽग्रासने तिष्ठति मूर्खभावात् ।

नान्यद्भयं पश्यति मूढचित्त इह प्रणाशे नरकं सुघोरम्" ।

तथा वशिष्ठः—

"चतुर्णां दुष्कृतं हन्ति ब्राह्मणो विघ्नकारकः ।
अन्नस्यान्नपतिः पङ्क्तेस्तथा भोजनकाङ्क्षिणः ।
भोजनकाङ्क्षिण इति स्वस्येति शेषः ।
विद्यातपोऽधिकानां वै प्रथमासनमिष्यते"

इत्यादि सुमन्तुवाक्यालोचनेन ब्राह्मणैरेव परस्परं योग्यतां पर्यालोच्य यथायथमग्र्यासनादिकं योज्यमिति स्थिते द्वौ दैवे त्रीन् पित्र्ये इत्यादि योजना कार्या ।

इदानीं श्राद्धाङ्गभूतचरणप्रक्षालनप्रकारोऽभिधीयते ।

तत्र मत्स्यः—

"भवनस्याग्रता भुवि । गोमयेनानानुलिप्तायां गोमूत्रेण तु मण्डले" इति ।

अयमर्थः—गोमयसहितेन गोमूत्रेण मण्डलद्वयं कर्तव्यमिति ।

अत्र शम्भूक्तो विशेषः—

"सम्मार्जिते तु लिप्ते तु दैवे कुर्वीत मण्डले ।
उदक्प्लवमुदीच्यं स्यात् दक्षिणं दक्षिणाप्लवम्" ।

उदीच्यं वैश्वदेविकं मण्डलमुदक्प्रवणं दक्षिणं पित्र्यं मण्डलं दक्षिणाप्रवणं कर्तव्यम् । मण्डलकरणानन्तरं दर्भस्थापनं, तत्र शम्भुः—

"उत्तरेऽक्षतसंयुक्तान् पूर्वाग्रान् विन्यसेत्कुशान् ।
दक्षिणे दक्षिणाग्रांस्तु सतिलान् विन्यसेद् बुधः" इति ।

अक्षता यवा इत्यवादि ।

तत्र मण्डलकरणप्रभृत्याश्राद्धसमाप्तेर्वैश्वदेवसम्बन्धि कर्म प्रदक्षिणं यज्ञोपवीतिना कर्तव्यम् । पितृसम्बन्धि यत्कर्म तत्सर्वमपसव्यं प्राचीनावीतिना कार्यम् । तदाह बौधायनः—

"प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः" इति । तथा मनुरपि—

"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधानात्कार्यं विधिवद्दर्भपाणिने"ति ।

तत्र कात्यायनो विशेषमाह—

"दक्षिणं पातयेज्जानु देवान्परिचरन्सदा ।
पातयेदितरज्जानु पितॄन्परिचरन् सदा" इति । ततोऽपसव्यवत् पूर्वमुदीच्यमण्डलं गत्वा दक्षिणमण्डलमभ्यर्च्य विप्रपादौ क्षालयेत् । तदुक्तं मत्स्यपुराणे—

"अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत् ।
विप्राणां क्षालयेत्पादावभिवन्द्य पुनः पुनः" इति । पादप्रक्षालनं च विश्वेदेवपूर्वम् ।

"पाद्यं चैव तथा चार्घ्यं दैव आदौ प्रयोजयेत् ।
शन्नो देवीति मन्त्रेण पश्चात्पित्र्ये प्रयोजयेत्"

इति ब्रह्मनिरुक्तवचनात् । तत्र पाद्यादिदानं च नामगोत्रोच्चारण-पूर्वकं कार्यं तदाह मत्स्यः—

"नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः" इति ।

अर्चनं च देवानां पादःप्रभृति शिरःपर्यन्तं, पितॄणां शिरःप्रभृति पादपर्यन्तमिति विशदयिष्यते अग्रे । पादप्रक्षालनोत्तरं पूर्ववदुपवेशनम् । तदाह मनुः—

"आसनेषु च क्लृप्तेषु बर्हिष्मत्सु पृथक् पृथक् ।
उपस्पृश्योकादकान्सम्यक् विप्रांस्तानुपवेशयेत्" इति । तथा सुमन्तुरपि—

"दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते ॥
दक्षिणाप्रवणे सम्यक् आचान्तान्प्रयतान्शुचीन् ।
आसनेषु विविक्तेषु सदर्भेषूपवेशयेत्" इति ।

तत्संख्या प्रागुक्तैव, तदाह योगी—

"द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्" इति ।

एवं मातामहानामपीति अतिदेशो दिङ्नियमसंख्याविषयः । वैश्वदेविकं कर्म श्राद्धार्थमावृत्त्याऽनुष्ठेयं तन्त्रेण वेत्यभिप्रायेण तन्त्रं वा वैश्वदेविकमित्युक्तम् ।

"तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।

कुर्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदेविकमि"ति मरीचि स्मरणात्। तत्रासनं संस्पृशन् सव्येन पाणिना दक्षिणेन ब्राह्मणमुपसङ्गृह्य समाध्वमिति चोक्त उपविशेत् इति।

"जान्वालभ्य ततो देवानुपवेश्य ततः पितॄन्।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत्"

इति धर्मस्मरणात्।

एते नियमैर्युक्तास्तिष्ठेयुः—

"पवित्रपाणयस्सर्वे ते च मौनव्रतान्विताः।
उच्छिष्टोच्छिष्टसंस्पृष्टं वर्जयन्तः परस्परम्"

इति वशिष्ठस्मरणात्। मौनिता च ब्रह्मोद्यकथाव्यतिरिक्तविषया।

"ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितम्" इति वचनात्।

ब्राह्मणेषूपविष्टेषु यतिब्रह्मचारिणौ यद्यागच्छेतां तदा तावप्युपवेशनीयौ।

"ब्राह्मणं भिक्षुकं चापि भोजनार्थमुपस्थितम्।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत्" इति मनुस्मरणात्।

तथा यमोऽपि—

"भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेदिति।

तथा छागलेयः—

"पूजयेच्छ्राद्धकालेऽपि यतिं सब्रह्मचारिणम्।

विप्रानुद्धरते पापात् पितृमातृगणानपी''ति ॥

ब्राह्मणोपवेशनानन्तरं त्रिःप्राणानायम्य तिथ्यादि स्मृत्वा पूर्वोक्तगुणविशिष्टतिथौ प्रक्रान्तं श्राद्धकर्म करिष्ये इति सङ्कल्प्य क्रतुस्मृत्याऽनुतिष्ठेत् । अपवित्रः पवित्रो वा इति जपित्वा—

"श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तते"

इति भूमौ हस्तं निक्षिप्य जपेत् । "ताभ्यां चैव नमस्कृत्य ततः श्राद्धं प्रवर्त्तयेदिति च पठेत् । अत्र द्वितीयार्थे तृतीया । ततस्तिलोदकेन पाकादिप्रोक्षणं कार्यम् ।

"शुद्धवतीभिः कूष्माण्डीभिः पावमानीभिः पाकादि प्रोक्षये-दि''ति स्मरणात् ।

अत्रैवं व्यवस्था व्याख्येया । वेदत्रयाशयेन सूक्तत्रयं, तत्र शुद्धवत्यः छन्दोगविषयिण्यः । एतं न्विन्द्रं स्तवामेति शुद्धवत्यः । कुष्माण्डयोऽध्वर्युविषयाः । यद्देवा देवहेडनमिति कूष्माण्ड्यः । पाव-मान्यः सुवर्जन इति पावमान्यः । तत एतैर्मन्त्रैस्तिलोदकं विधायेति ।

"उभौ हस्तौ समौ कृत्वा जानुभ्यामुपरिस्थितौ ॥
स प्रश्रयं चोपविष्टान् सर्वान्पृच्छेद् द्विजोत्तमान् " इति ।
ततः—"देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः"

इति मन्त्रं त्रिः पठेत् ।

"आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदे''ति वचनात् ।
"पिण्डनिर्वपणे चैव जपेदेतत्समाहितः ।

पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च" ॥

ततः केचित्—श्राद्धभूमौ सिद्धार्थकाः गौरसर्षपा निक्षेपणीया इत्याहुः ।

"सिद्धार्थकान् क्षिपेद भूमौ रक्षसामपनुत्तये"

इति वचनात् ।

ततस्तिलान् सर्वदिक्षु विकिरेत् । तत्र मन्त्रः—

"निहन्मि सर्वं यदमेध्यमत्र हताश्च सर्वे सुरदानवा मया ।

रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे"इति ।

तदुक्तं निगमे—"अपहता इति तिलान् विकिरेदि"ति । मन्त्रस्तु—अपहता असुरा रक्षाᳪसि वेदिषदः इति । स्मृत्यन्तरे विशेष उक्तः—

"अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।

तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः ॥

प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।

रक्षोभूतपिशाचेभ्य स्तथैवासुरदोषतः ॥

सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे" इति ।

अथासनम् । आसनं च ब्राह्मणहस्ते उदकदानपूर्वकं कर्तव्यम् ।

"पाणिप्रक्षालनं कृत्वा विष्टरार्थान् कुशानपि" इति योगिस्मरणात् ।

तथा—

"कुरुष्वेति स तैरुक्तो दद्यादर्भासनं तथा" इति पुराणेषु स्मरणात् । आसनं चासने देयम् । तदुक्तम्—

"आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वा" इति ।

वाशब्दो व्यवस्थितविकल्पार्थः—व्यवस्था चैवं दैवे दक्षिणतः पित्र्ये वामे इति ।

"पितृकर्मणि वामे वै दैवे कर्मणि दक्षिणे"इति स्मरणात् । काठके विशेषः—

"प्रदद्यादासने दर्भान्नतु पाणौ कदाचन ।
देवानामथवा दर्भाः पितॄणां च यवैः सह" इति ।

आसनमुदङ्मुखो देवानां पितॄणां दक्षिणामुखो दद्यात् ।

"उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।
आसनार्घ्यादिकं दद्यात्सर्वमेव यथाविधि" इति

क्रतुस्मरणात् । आसनार्घ्यादौ नियमविधानं पादप्रक्षालनादौ प्रत्यङ्मुखतामाह । शङ्खस्मृतौ तु—श्राद्धभेदेन विश्वेदेवादिसंज्ञा भेदो दृश्यते ।

"इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविकौ ।
नान्दीमुखे सत्यवसू काम्येषु धूरिलोचनौ ।
पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।
नैमित्तिके कामकालौ एवं सर्वत्र कीर्तयेत्" ।

नैमित्तिकं सपिण्डीकरणम् ।

"दत्त्वाऽऽसनं ततो दैवे कामकालौ सदैव ही"ति स्मृतेः ।

तदुत्पत्तिः श्रूयते—

"दक्षस्य दुहिता साध्वी विश्वा नाम परिश्रुता ।
तस्याः पुत्रा महात्मानो विश्वेदेवा इति स्मृताः ।

गुरुणा तु दश प्रकारताऽभिहिता—

"क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च ।
धूरी तथा लोचनश्च तथा चैव पुरूरवाः ॥
आर्द्रवाश्च दशैवैमे विश्वेदेवाः प्रकीर्तिताः" इति ।

कर्माङ्गं श्राद्धम्—

"निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं तच्च वृद्धिवत्" इति पारस्करेणाभिहितम् । नान्दीमुखं वृद्धिश्राद्धम् ।

"पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतमि"ति वृद्धवशिष्ठस्मरणात् । आदिशब्दः अन्नप्राशनचूडाकरणादिसंस्कारपरिग्रहार्थः । फलकामनोपाधिकं काम्यम् । पार्वणममावास्याश्राद्धम् । नैमित्तिकं सपिण्डीकरणम् । अत्रायमासनादौ प्रयोगः । तत्र स्मृतिः ।

"अक्षय्यासनयोः षष्ठी चतुर्थी चासने मता ।
अर्घेऽवनेजने पिण्डे तथा प्रत्यवनेजने ॥
सम्बुद्ध्यन्तानि कुर्वीत शब्दशास्त्रविशारदः" ।

आसने षष्ठी, चतुर्थ्यां देशपरत्वेन वा व्यवस्थया विकल्पः—

व्यासस्तु विशेषमाह—

"चतुर्थी त्वासने नित्यं सङ्कल्पे च विधीयते ।
प्रथमा तर्पणे प्रोक्ता सम्बुद्धिमपरे जगुः" इति । बृहत्प्रचेताः—

"गोत्रं स्वरान्तं कुर्वीत गोत्रस्याक्षय्यकर्मणि ।
गोत्रस्तु तर्पणे प्रोक्तः कुर्वन्नेवं न मुह्यति ।
गोत्रशब्दस्य स्वरान्तताऽत्र पार्वणविषया एव न सर्वत्र ।

अयमत्र क्रमः—विश्वेदेवार्थब्राह्मणहस्ते जलं विष्टरार्थं कुशां-श्च युग्मान् द्विगुणितानासनार्थं च दक्षिणतो दत्वा विश्वान्देवाना वाहयिष्ये इति ब्राह्मणान् पृष्ट्वा आवाहयेति ब्राह्मणैरनुज्ञातो दक्षिणं जान्वालभ्य यथोक्ते नामनी समुच्चार्य "विश्वे देवास आगत शृणु-ता म इमꣳ० हवम् । एदं बर्हिर्निषीदत । विश्वे देवाः शृणुतेमꣳ० हवं मे येऽ अन्तरिक्षे य ऽउप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्राऽ आसद्यास्मिन् बर्हिषि मादयध्वम्" । विश्वे देवाः शृणुतेत्य नया च । आगच्छन्तु महाभागा इति स्मार्तमन्त्रेण च ।

दक्षिणयज्ञोपवीती सत्यवाक् दक्षिणपादादिमस्तकान्तमक्ष-तान् विकिरेत् । इदं चात्र छन्दोगानां विशेषतो द्रष्टव्यम् । तन्मते ओषधयः समवदन्त इत्ययमपि मन्त्रो जप्यः ।

यद्यपि गुरुणा प्रतिश्राद्धं द्वयोर्द्वयोर्नामनी उक्ते तथापि विश्वे-देवा इत्यादिमन्त्रेषु बहुवचनश्रवणात् पक्षान्तरे च कारणादर्श-नात् तेषामावाहनादौ बहुवचनमेव नामसङ्कीर्तने ज्ञेयम् । ततोऽन-न्तरं तैजसादिभाजने कुशयुग्मान्तर्हिते शन्नो देवीरभिष्टय इत्यन-यर्चा उदकं निक्षिप्य यवोऽसि धान्यराजो वेत्यादिमन्त्रेण यवान्, ततो गन्धपुष्पाणि च तूष्णीमेव निक्षिप्य धूपं च प्रदर्श्यानन्तरमर्घ्य पात्रं पवित्रान्तर्हितेषु ब्राह्मणहस्तेषु या दिव्या आपः पयसेत्यादिम-न्त्रेण विश्वे देवा इदं चार्घ्यम्, इत्यर्घ्योदकं विनिक्षिपेत् । छन्दोगाश्चेत् यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः इति मन्त्रं पठेयुः । तथा च योगियाज्ञवल्क्यः—

"यवैरभ्यवकीर्याऽथ भाजने सपवित्रके ।

शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्" इति ।

अत्र विशेषमाह गार्ग्यः—

"दत्त्वा हस्ते पवित्रन्तु हस्तेष्वर्घ्यं विनिक्षिपेत्" इति ।

पवित्रमाह योगी—

"पवित्रे इति मन्त्रेण द्वे पवित्रे च कारयेत् ।
अन्तर्दर्भकुशच्छिन्ने कौशे प्रादेशसम्मिते" इति ।

अङ्गुष्ठाङ्गुलिपर्वभ्यां छेदो न नखैः । अत्र चार्घ्यपवित्रकं प्रतिपात्रभेदेन कर्त्तव्यम् ।

"द्वे द्वे शलाके देवानां पात्रे कृत्वा पयः क्षिपेत्"

इति चतुर्विंशतिमतवचनात् ।

अत्र केचिद् व्याचक्षते—भाजने सपवित्रक इति सप्तम्यन्तपदत्वात् देवस्थाने एक एवार्घ्य इति । ब्राह्मणद्वित्वेऽपि सत्येकेनैव पात्रेणाभयार्थसिद्धेः । ननु द्वौ दैवे इत्युक्तत्वात् प्रत्येकं च देवताध्यासात् ब्राह्मणोपाधिभेदेन पात्रभेदः स्यादिति चेत्सत्यमेतत् । ब्राह्मणभेदेऽपि ब्राह्मणसंख्यया पात्रविधानाभावात् । अन्यथा एकस्मिन् पितरि असमसंख्यया बहुब्राह्मणप्रवेशने ब्राह्मणसंख्यया अर्घ्यपात्रकल्पना दुर्वारा स्यात् । ततश्च तत्रानेकेष्वपि ब्राह्मणेषु पितृस्थाने एकमेव पात्रम् , तथा पितामहप्रपितामहस्थाने ।

"एकस्मिन् ब्राह्मणे येन योज्यन्ते पितरोऽखिलाः ।
यथा हवींषि सर्वाणि हूयन्ते हव्यवाहने"

इति लघुपक्षाश्रयणेन शिष्टे एकस्मिन्नेव ब्राह्मणे नियोजिते-

देवताभेदात्पात्रत्रयमेव क्रियते नतु ब्राह्मणानुरोधादेकमिति, तद्वद् दैवकर्मण्यपि तथैव योजितव्यम्। अनेनैवाभिप्रायेण कर्कभाष्यकारा अपि एकमेवार्घ्यपात्रं देवस्थाने समर्पयन्तस्तथैव स्मरन्ति—

"अर्घ्यं स्यादर्घ्यहेतुत्वादतस्तु पितृसंख्यया।
प्रकुर्यादर्घ्यपात्राणि नातो विप्रस्य संख्यये"ति ॥

तत एकमेवार्घ्यपात्रमित्येके। अपरे तु द्वे एव पात्रे कर्तव्ये इत्याहुः, भाजने सपवित्रके इति पदस्य द्विवचनान्तत्वात्। न चैकदेवतात्वादेकपात्रता शक्या।

"पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतावि"ति स्मरणात् देवताद्वयप्रतीतेरनपलपनीयत्वात्। अन्यथा एकदेवतायामेकस्यैव ब्राह्मणस्य नियोज्यत्वापत्तेः। ततश्च "द्वौ दैवे त्रीन् तथा पित्र्ये" इति स्मृतिव्याकोपस्तस्माद् देवताभेदात्पात्रभेद इत्येव युक्तम्। तदुक्तं मत्स्यपुराणे—

"विश्वान्देवान्यवैः पुष्पैरभ्यर्च्यासनपूर्वकम्।
पूरयेत्पात्रयुग्मन्तु स्थाप्ये दर्भपवित्रके" इति।

तथा प्रचेता अपि—

"एकैकस्य तु विप्रस्य अर्घ्यपात्रे विनिक्षिपेत्।
यवोऽसीति यवान्कीर्य गन्धपुष्पैः सुपूजितैरि"ति ॥

अत्रोभयासम्भवेऽपि स्वकुलाचारतो व्यवस्था द्रष्टव्या।

ततः करशौचार्थमुदकं दत्वा क्रमेणैव गन्धपुष्पधूपदीपाच्छादनदानं कुर्यात्। गन्धदानं च पवित्ररहितकराभ्यामेव।

"अपवित्रेण हस्तेन गन्धं दद्यादि"ति स्मरणात्। गन्धश्चन्दन

कर्पूरागरुपद्मकान्यनुलेपनार्थं इति विष्णूक्तरीत्याऽस्मदुक्तरीत्या च कर्तव्यः । पुष्पाणि जातीमल्लिकाश्वेतयूथिकाजलजचम्पकप्रभृतीनि प्रागेवाभिहितानि ।

गन्धादिदानस्योदकपूर्वकता योगिना दर्शिता ।

"दत्वोदकं गन्धदानं धूपदानं सदीपकम्" इति । एवमासनदानप्रभृत्याच्छादनपर्यन्तं वैश्वदेविकार्चनं काण्डानुसमयेन विधाय आसनप्रभृत्याच्छादनपर्यन्तं प्राचीनावीत्यपसव्येन कुर्यात् ।

"अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणमि"ति याज्ञवल्क्य स्मरणात् । तथा—

"उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।
प्रदद्यात्पार्वणे सर्वं देवपूर्वं विधानतः" इति शातातपस्मरणात् । तस्माद्वैश्वदेविकमासनाच्छादनान्तं कर्मकलापं काण्डानुसमयेन विधाय पैतृकमासनाद्याच्छादनान्तं कर्म कर्तव्यमिति सिद्धम् ।

ननु दैवे पित्र्ये च आसनप्रभृत्याच्छादनपर्यन्तानां पदार्थानां पदार्थानुसमयेनानुष्ठानं सम्भवति, कस्य हेतोः काण्डानुसमयेनानुष्ठानमङ्गीक्रियते । पदार्थानुसमयेन हि प्रधानप्रत्यासत्तिस्तेषां भवेत् वैषम्याभावश्च । एवमनङ्गीकारे हि केषां चित् प्रधानप्रत्यासत्तिः केषां चित्प्रधानाप्रत्यासत्तिरिति । अत्राभिधीयते— आसनावाहनार्घ्यादिपदार्थेषु काण्डानुसमय एवाभ्युपेयते वचनबलात् । स्पष्टमत्र "अपसव्यं ततः कृत्वे"ति वाचनिकत्वं ततो वैश्वदेविकासनादिपदार्थानां काण्डानुसमयानुष्ठाने पित्रर्चनविधावपि काण्डानुसमय एव ज्यायान् ।

ततः पित्र्यादीनां च त्रयाणामयुग्मान् कुशान् द्विगुणभुग्नान् प्रदक्षिणं वामतो विष्टरार्थमासनेषूदपूर्वं दद्यात्, ततः पुनरुदकं दद्यात्। तथा चाहाश्वलायनाचार्यः—

"अपः प्रदाय द्विगुणभुग्नान् कुशान् कृत्वा अपः प्रदाये"ति। इदं वैश्वदेविके पित्र्ये च कर्मणि आद्यन्तयोरुदकदानं च प्रतिपदार्थं द्रष्टव्यम्। तत आसनानन्तरं प्राचीनावीतं विधाय सतिलान् द्विगुणदर्भानादाय श्राद्धे क्षणः क्रियतामिति क्षणं दत्वा सव्यं जान्वालभ्य द्वितीयाविभक्त्या बहुवचनान्तगोत्रशब्दं समुच्चार्य तथैव ब्राह्मणानामान्युच्चार्य पितॄन् पितामहान् प्रपितामहान् इति ब्राह्मणानामाज्ञां पृष्ट्वा आवाहयेति ब्राह्मणैरनुज्ञातः उशन्तस्त्वा निधीमहीत्येतयर्चा आवाहनं विधाय आयन्तु नः पितर इति मन्त्रेणोपस्थाय अपहता इत्यनेन अप्रदक्षिणं तिलान् विकिरेत्।

छन्दोगास्तु जानुविसर्जनानन्तरं एतद्वः पितरः सोम्यास इत्यादि जप्त्वा शेषं पूर्ववत्कुर्युः। तत आवाहनानन्तरमर्घ्यादिकं कुर्यात्।

पात्रासादनं च विष्णूक्तरीत्या, दक्षिणापवर्गतयाऽऽपादितेषु पवित्रान्तर्हितेषु त्रिष्वपि पात्रेषु शन्नो देवीरभिष्टय इति मन्त्रेण प्रतिपात्रमुदकमासिञ्चेत्। पात्राणि चार्घ्यब्राह्मणबहुत्वेऽपि देवतासङ्ख्यया त्रीण्येव।

"स्तीर्त्वा पितॄणां त्रीण्येव कुर्यात् पात्राणि धर्मवित्।
एकस्मिन् वा बहुषु वा ब्राह्मणेषु यथाविधि" इति।

स्तीर्त्वा अर्घ्योदके तिलान् क्षिप्त्वा इत्यर्थः। अर्घ्यपवित्रं

युग्मसंख्यया कर्तव्यम् । तदुक्तम्—

"पितृपात्रे विशेषोऽयं तिलोऽसीति तिलान् क्षिपेत् ।
तिस्रः तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे ॥
एकोद्दिष्टे शलाकैकां निधायोदकमाहरेत् ।
सर्वदैव हि कर्तव्यं पितृणां च तिलोदकम् ॥
ताम्रपात्रेण कर्तव्यमन्यथा हि वृथा भवेदि"ति ।

अर्घार्थायापस्तम्बः — "गन्धादिभिः पूज्याः, तत्रैकदर्भशलाकानिधानं, तिलोऽसि पितृदेवत्यो गोसव इति मन्त्रेण तिलावपनम् । अर्चनं शिरः प्रभृति पादपर्यन्तम्" ।

"शिरस्तः पादतो यावत् सम्यगभ्यर्च्य संयतः ।
पूर्ववत्पृथगेकैकमेकैकं चार्चयेत् क्रमादि"ति स्मरणात् । पादतः पठितस्यापि पूषानुमन्त्रणवदुत्कर्षः । तस्य दैविकत्वात् । ततो—

"गोत्रसम्बन्धनामानि पितृणामनुकीर्तयेत् ।
एकैकस्य तु विप्रस्य अर्घ्यं पात्रे विनिक्षिपेत्"

इत्युक्तेः सपवित्रहस्ते या दिव्या इति मन्त्रमुच्चार्य मन्त्रान्ते अमुकशर्मन्नेष तेऽर्घ इति वदेत् । स्त्रीविषये गोत्रे देवि अमुकशर्मन् इति विशेषः ।

छन्दोगाश्चेदेवं वदेयुः—इमम्मे इति मन्त्रं पठित्वा अमुकसगोत्र शर्मन् एप ते अर्घः ये च त्वामनु तस्मै ते स्वधेत्यप उपस्पृशेत्' सर्वत्रैवम् । नैकोद्दिष्टे, तत्र एष तेऽर्घः स्वधेत्येतदेव वदेत् । स्त्रीविषये ऊहः, एष तेऽर्घः याश्च त्वामनु इति ।

गोत्रशब्दः सकारेणैव वक्तव्यः। अमुकसगोत्रेति। यतो हि सकारः पापं विहन्ति।

"सकारेण हि कर्तव्यं गोत्रं सर्वत्र धीमता।
सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन तं वदेत्"॥
कुत्सितं पापं तापयतीति कुतपः इति व्युत्पत्तिः
"पापं कुत्सितमित्याहुस्तस्य सन्तापको ह्यसौ।
प्रयुक्तस्तु भवेद्यस्मात् कुतपस्तु ततः स्मृतः"

इति स्मरणं च। तत अमुकसगोत्र इति सर्वत्र कर्तव्यं, स्त्रीविषये अमुकसगोत्रेति। अत्रायमनुष्ठानक्रमः। तिलान् अपहता असुरा रक्षांसीत्यादिना मन्त्रेण ब्राह्मणान्परितोऽप्रदक्षिणमवकीर्य राजतादिपात्रेषु त्रिषु युग्मकुशनिर्मितकूर्चान्तर्हितेषु शन्नो देवीरिति मन्त्रेणापः क्षिप्त्वा तिलोऽसीति पूर्वाभिहितमन्त्रेण तिलान् गन्धपुष्पाणि निक्षिप्य स्वधाऽर्घ्या इति ब्राह्मणानां पुरतः पात्राणि स्थापयित्वा या दिव्या इति मन्त्रेण पितरिदं तेऽर्घ्यमिति दद्यात्। ता आपो ब्राह्मणाः प्रतिग्रहीष्यन् स्वर्घ्या अर्घ्य इति मन्त्रेण स्थापयेत्" इत्यर्घ्ये शौनकस्मरणात्। अर्घे दीयमाने संस्रवान् पतितान् प्रथमं पितृपात्रे कृत्वा श्राद्धदेशादुत्तरे दक्षिणाग्रं सतिलं कुशस्तंबं निधाय तस्योपरि पितृभ्यः स्थानमसीति मन्त्रेण अधोमुखं पात्रं कृत्वा तदुपरि अर्घ्यं पवित्रं कृत्वा तृतीयपात्रेणापिधाय तदुपरि अपि कुशं दत्वोत्तरतो निदध्यात्। पुत्रकामश्चेत् पितृपात्रसंस्रवैर्मुखं मृज्यात्।

"प्रथमे पितृपात्रे तु सम्भृत्योदकसंस्रवान्।
प्रनक्ति वदनं पश्चात् पुत्रकामो भवेद्यदी"ति स्मरणात्।

तथा—"शुन्धन्तांल्लोका इति तु सिञ्चेद् भूमिं, क्षिपेत् कुशान्"।
पितृभ्यः स्थानमसीति मन्त्रेण अधोमुखं पात्रं कृत्वा तदुपरि अर्घ्यपवित्रं निदध्यात्।

"उद्धरन् प्रथमं पात्रं पितृणामर्घपातितम्।
आवृतास्तत्र तिष्ठन्ति पायद्विप्रविसर्जनम्॥
उद्धरेत्तु यदा पात्रं विततं तु यदा भवेत्।
अभोज्यं तद्भवेच्छ्राद्धं देवैः पितृगणैर्गतैरि"ति॥

न्युब्जं पात्रं केचिदर्घ्यदानात्पूर्वमेव कुर्वन्ति ते भ्रान्ताः इत्युपेक्ष्याः। "न्युब्जं कुर्यात्पवित्रवदि"त्युक्तेः। कृत्वा पात्रे संस्रवान-वनयतीत्यादि।

पात्रस्थमवशिष्टं द्रव्यं संस्रवशब्देनाभिधीयते यद्यपि, तथापि यत्र विप्रहस्तगलितमुदकं संस्रवशब्देनाभिधातुं शक्यं भूतपूर्वगतेः, तत्र पात्रम् ऊर्जं वहन्तीरित्येतत्पिण्डोपरि उदकनिषेचनपर्यन्तं न्युब्जं कार्यम्। तथा च कात्यायनः—

"पैतृकं प्रथमं पात्रं तस्मिन्पैतामहं न्यसेत्।
तृतीयं च न्यसेत्तत्र नोद्धरेन्न च चालयेत्"

इति। इत्यर्घ्यम्॥

ततो गन्धपुष्पधूपदीपवस्त्रोपवीतानि, पितरयं ते गन्धः पितरिदन्ते पुष्पमित्यादिप्रयोगेण दद्यात्।। यज्ञोपवीतदानं सत्यपि वस्त्रे ज्ञेयम्।

"उपवीतं तु यो दद्याच्छ्राद्धकर्मणि धर्मवित्।
पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम्"

इति वायुपुराणात् ।

ततो ब्राह्मणपूजोत्तरं करसम्पुटं शिरसि कृत्वा मन्त्रहीनं क्रियाहीनमिति प्रार्थनां कुर्यात् । अत्रावसरे श्राद्धाचमनं कार्यम् । श्राद्धे षड्धाऽऽचमनश्रवणात् । तथाहि—

"आदावन्ते तथाऽर्चायां विप्रपादप्रशोधने ।
विकिरे पिण्डदाने च षड्भिराचमनं स्मृतम्" इति ।

सप्तम्यर्थे तृतीया सुपां सुपो भवतीति पाणिनिस्मरणात् ।

अयमर्थः स्मृतेः । आदाविति विप्रपादशोधनात्पूर्वं तथा तच्छोधनानन्तरं तथा च समाप्तौ आसीमान्तमनुव्रज्येति व्रजनानन्तरम् । स्पष्टमन्यत् । तत्र प्रथमतो द्विराचमनं शेषं सकृत्सकृदिति ।

"कृत्वा च पितृकार्याणि सकृदाचम्य शुद्ध्यती"ति स्मृतेः ।

अथाग्नौकरणम्, तच्च सव्येनापसव्येन वा कर्तव्यम् । तत्र स्वगृह्यस्मृत्यनुरोधतो व्यवस्था ज्ञेया, तत्र पूर्वमग्नौ करिष्य इति ब्राह्मणाज्ञामादाय कुरुष्वेति तैरभ्यनुज्ञात एव कुर्यादिति नियमः ।

"अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत् ॥
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः"

इति योगीश्वरस्मरणात् । घृतग्रहणं व्यञ्जनादिनिवारणाय ।

यद्यपि गोधूमा अपि क्षारद्रव्ये पठितास्तथापि व्रीह्याद्यभावे गोधूमानामोदनप्रकृतितयोपादानात् तद्वर्जं क्षारद्रव्यं निषिध्यते । तथा मदालसावाक्यम् ।

"अग्निकार्यमनुज्ञातः कुरुष्वेति ततो द्विजैः ।
जुहुयाद् व्यञ्जनक्षारं वर्जयेत्तु यथाविधि" इति ।

व्यञ्जनं शाकादि घृतोदनव्यतिरिक्तम् । ततश्च कुरुष्वेति ब्राह्मणाज्ञामादाय इध्ममुपसमाधाय प्राचीनावीती वा मेक्षणेनावदानमादाय सोमाय पितृमते स्वधा नमः इति पितृयज्ञकल्पेन अग्नौ हुत्वा मेक्षणमनुप्रहृत्य हुतशेषं मृन्मयवर्जपात्रे विशेषतो राजते पित्र्यादि भाजने देयम् । मृन्मयं यद्यपि क्वचिद्विधीयते तथापि—

"मृन्मयेषु तु पात्रेषु यः श्राद्धे भोजयेत्पितॄन् ।
अन्नदाता पुरोधा च भोक्ता च नरकं व्रजेदि"ति
निषेधात्तद्वर्ज्यम् । रौप्यं पितॄणामेव देयं न देवानाम् ।
"अग्नौकरणशेषं तु पित्र्ये तु प्रतिपादयेत् ।
प्रतिपाद्य पितॄणान्तु न दद्याद्वैश्वदेविके"

इति स्मरणात् ।

यद्यपि ग्रन्थान्तरे प्राचीनावीतित्वं दृश्यते तथापि तत्प्रकृतिभूतपिण्डपितृयज्ञस्य दैविकत्वात्पैतृकत्वाच्च कल्पितोभयधर्मकत्वात्प्रकृतिभूताग्नौकरणहोमे प्राचीनावीतित्वोपवीतित्वयोर्विकल्पोऽवसीयते । व्यवस्था तु यथाशाखमत्र । आश्वलायनास्तु विशेषमाहुः—

"उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्ये करवै करवाणीति वा प्रत्यनुज्ञातः क्रियतां कुरुष्व कुर्वीतेत्यलत्त्वाद्वाऽग्नौ जुहोतीति यथोक्तं पुरस्तात्पिण्डपितृयज्ञे" इति ।

इदं च कर्म साग्निनिरग्निसाधारणम् । पाणावग्नौ वा क्रिय-

माणस्याग्नौकरणत्वाश्चस्य च कर्मनामधेयत्वात् । ततः साग्निर्नि-
रग्निर्वा वैश्वदेवे नैव दद्यात् ।

"पिण्डेभ्यः शेषयेत्सर्वं न दद्याद्वैश्वदेविके ।
नहि स्मृताः शेषभाजो विश्वे देवाः पुराणगैरि"ति वायुपुराणे
निषेधदृष्टेः ।

अतो न वैश्वदेवे देयमिति सिद्धम् ।

अग्नौकरणं स्मार्तम् , अतो विवाहाग्नौ कार्यम् । सर्वाधानिनोपा-
सनाग्न्यभावे दक्षिणाग्नौ कार्यम् । तदसन्निधाने लौकिकाग्नौ कार्यम् ।

"आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः ।
अग्न्यर्थं लौकिकं वापि जुहुयात्कर्मसिद्धये"

इति वायुपुराणवाक्यात् ।

अग्न्यर्थमौपासनाग्निसिद्ध्यर्थम् । दक्षिणाग्न्यसन्निधाने पाणौ
होमं कुर्यात् ।

"हस्तेऽग्नौकरणं कुर्यात् अग्नौ वाऽनग्निको द्विजः"

इति स्मरणात् ।

अयं हि स्मृत्यर्थः सांप्रदायिकः । सर्वाधानी त्वाहिताग्निः द
क्षिणाग्न्यसन्निधाने द्विजहस्ते लौकिकाग्नौ वाऽग्नौकरणं कुर्यात् ।
यदा त्वाधानेनाहिताग्निरनाहिताग्निरप्यग्निमान् , तदौपासनेऽग्नौ-
करणं, तदभावे द्विजहस्तेऽप्सु वेति ।

तदुक्तं विष्णुधर्मोत्तरे मार्कण्डेयेन—

"आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः ।
अनाहिताग्निस्त्वौपासने तदभावे द्विजेऽप्सु वे"ति ॥

जले अग्नौकरणं जलसन्निधौ श्राद्धानुष्ठानविषयम् ।

"स यदाऽपां समीपे स्याच्छ्राद्धे ज्ञेयो विधिस्तदे"ति

कात्यायनस्मरणात् ।

"अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्"

इति मनुवचनं तु ब्रह्मचारिविषयम् ॥

"अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे ।

अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न विन्दति"

इति जातूकर्ण्यस्मरणात् । अग्नौ विद्यमानेऽपि काम्यादिचतुष्टये पाणावेव होमः कार्यः । अनेनैवाभिप्रायेणाहुर्गृह्यकारा अपि—

"आन्वष्टक्यं च पूर्वेद्युर्मासि मासि च पार्वणम् ।

काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥

चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।

पित्र्ये ब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपी"ति ॥

अयमर्थः—

हेमन्तशिशिरयोरित्यादिना चतस्रोऽष्टम्योऽष्टका विहिताः, तत्र नवमीश्राद्धमन्वष्टक्यं, सामान्यं क्रियमाणं पूर्वेद्युः, मासि मासि कृष्णपक्षे पञ्चमीप्रभृतिषु यस्यां कस्यां तिथावन्वष्टक्यातिदेशेन यद्विहितं, अमावास्यायां पिण्डपितृयज्ञानन्तरं यद्विहितं तत्पार्वणम् । काम्यं स्वर्गादिफलोद्देशेन कृत्तिकादिनक्षत्रेषु विहितम् । अभ्युदये पुत्रोत्पत्त्यादिषु विहितम् । अष्टम्यामष्टका विहिताः । एकोद्दिष्टं सपिण्डीकरणम्, अथवा एकोद्दिष्टं मुख्यमेव । ततश्चाष्टौ श्राद्धानि—आन्वष्टक्यं, नवमीश्राद्धं, पूर्वेद्युः, सप्तमीश्राद्धं, मासि मासि पञ्चम्यादिषु विहितं,

पार्वणममावास्याश्राद्धं, काम्यं नक्षत्रेषु फलोद्देश्यकं, अभ्युदयश्राद्धं पुत्रोत्पत्तितडागारामदेवताप्रतिष्ठादिषु विहितम्, अष्टकाश्राद्धमष्टम्यां विहितं, एकोद्दिष्टं सपिण्डीकरणम्, अथवा एकोद्दिष्टं मुख्यमेव। आद्यचतुष्टये अग्नौ होमः अन्त्ये पाणाविति। नन्वग्नौकरणं कथं पाणौ तत्राग्न्यभावात्, सत्यम् अस्ति हस्तेऽप्यग्निः।

"अजस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे।
अप्सु चैव कुशस्तम्बे अग्निः कात्यायनोऽब्रवीत्"

इति शङ्खस्मरणात्। तस्मात्—

"अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्।
पर्युक्ष्य दर्भानास्तीर्य यतो ह्यग्निसमो द्विजः"

इति वचनात्पाणावपि अग्नौकरणं कर्तव्यम्। इदं चोपवीतिना कार्यम्।

"अग्नौकरणहोमस्तु कर्तव्य उपवीतिना।
प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिः स्मृतिः॥
अपसव्येन वा कार्यो दक्षिणाभिमुखेन वा।

निरूप्य हविरन्यस्मै अन्यस्मै नहि हूयते" इत्यादि वाक्यं तु परमतोपन्यासपरम्, अन्यथा वाक्यान्तरविरोधात् इत्यलमनेन। तस्मादनग्निः पाणावग्निकरणं कुर्यात्।

तदाह कात्यायनः—

"पित्र्ये यः पङ्क्तिमूर्धन्यः तस्य पाणावनग्निकः।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत्" इति।

ननु बाहुल्येन विप्रपाणावित्यविशेषश्रवणेऽपि

"दैवविप्रकरेऽनग्निः कृत्वाऽग्नौकरणं द्विज" इत्यादिकारिकायां विशेषदर्शनात् काग्नौकरणं, सत्यम् । विकल्पो ज्ञातव्यो व्यवस्थायै, दैविकब्राह्मणकरपक्षेऽपि पित्र्यब्राह्मणपात्रेष्वेव शेष निक्षेपः ।

"हुत्वा शेषकरेणैव शेषं पित्र्ये निवेदयेत् ।
न हि स्मृताः शेषभाजो विश्वे देवाः पुरागणैरि"ति

वायुपुराणवाक्यात् ।

ततो दैवपित्र्यकरयोर्विकल्पः अत्रापि अग्नौकरणविधानात् । अथवाऽग्न्यभाव इति स्मार्ताग्न्यभावाभिप्रायेणैवाभिहितम् । किं तर्हि अकृतदारपरिग्रहाभिप्रायेण ।

"अग्न्यभावे तु विप्रस्य हस्ते दत्वा तु दक्षिणे ।
अग्न्यभावः स्मृतः स्तावद्यावद्भार्यां न विन्दन्ती"ति जातूकर्ण्य वचनात् । तस्मादनुपनीतस्य उपनीस्यापि वा अकृतदारपरिग्रहस्य यदा श्राद्धकर्तृत्वं तदा दैवब्राह्मणकरेऽग्नौकरणं, कृतदारपरिग्रहस्य श्राद्धकर्तृत्वे पित्र्यब्राह्मणकरे इति व्यवस्था ज्यायसी ॥

अनुपनीतानग्निकयोरपि श्राद्धेऽधिकारः ।

"श्राद्धमर्हति यद्येकः पितर्युपरते सुतः ।
विनापि श्रद्धया श्राद्धं तथा कुर्यादनग्निकः ॥
पितृयज्ञाहुतिं पाणौ प्रदद्याद् ब्राह्मणस्य सः ।
अर्हत्यनुपनीतोऽपि विनाऽप्यग्निं विनाऽऽपदम्" इति ।

तथा—

"न ह्यस्मिन्विद्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।

नाभिव्याहरते ब्रह्म स्वधानिनयनादृते" ॥

तथा—काश्यपोऽपि—

"दिव्ये विप्रकरेऽनग्निः कृत्वाऽग्नौकरणं द्विजः ।

शेषं यतिपितृविप्रेभ्यः पिण्डार्थं शेषयेत्तथे"ति ।

पाणितलदत्तमन्नं पृथक् न भोक्तव्यं किन्त्वेकीकृत्य तदुक्तं गृह्यपरिशिष्टे—

"यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।

एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।

पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते" ॥

यदि दैवविप्रकरे होमस्तदा पितृमातामहश्राद्धद्वयार्थं सकृदेवानुष्ठेयः । वैश्वदेवभेदेऽपि पितृत्वाधिकरणकारकस्य सम्प्रतिपन्नत्वात् । यदा पित्र्ये द्विजपाणौ तदा मातामहब्राह्मणकरेऽपि पार्थक्येनानुष्ठेयः । वैश्वदेविकतन्त्रत्वेऽपि तत्राधिकरणकारकस्य सम्प्रतिपन्नत्वात् । इत्यग्नौकरणम् ॥

ततः पात्राणि द्विः प्रक्षालयेत् । ततः परिवेषणं यद् हुतशेषदानानन्तरं तत् ।

"हुतशेषं पितृभ्यस्तु दत्वाऽन्नं परिवेषयेत्" इति स्मरणात् । तत्प्रकारस्तूक्तः—

"पाणिभ्यामुपसंगृह्य स्वयमन्नस्य वर्द्धितम् ।

विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत्" ॥

परिवेषणं भार्यया कर्तव्यम् । "परिवेषणं भार्यये"ति स्मर

णात् । तथैव—

"सवर्णयैव कर्तव्यं यत्पवित्रं सुखावहम् ।

द्विजातिभ्यः सवर्णाया हस्तेनैव तु दीयते" इति नारायणवचनात् । तदन्नं च साक्षाद्धस्तेन नैव दातव्यम् । किन्तु दर्व्यादिद्वारा-

"हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनादयः ।

दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्विषम्" इति

शातातपस्मरणात् । तथा पुराणमपि—

"नापवित्रेण हस्तेन नैकेन न विना कुशम् ।

नायसे नायसेनैव श्राद्धे तु परिवेषयेत्" ।

आयसे अयोमये पात्रे । विष्णुः—"घृतादिदाने तैजसानि पात्राणि वा फल्गुपात्राणि प्रशस्तानि । पितृगाथा च श्रूयते—

"सौवर्णराजताभ्यां च खड्गेनोदुम्बरेण वा ।

दत्तमक्षयतां याति फल्गुपात्रं तथैव चे"ति ॥

परिवेषणे च वैश्वदेवपूर्वं तत्र कारणं पुराणे उपन्यस्तम् । तथाहि—

"तप्यमानास्तु ये तीव्रं क्षेपिता ब्रह्मशासनात् ।

विश्वेदेवास्तु रक्षार्थं पितृयज्ञेषु सर्वदा ॥

अतः पूर्वं प्रदातव्यं तेभ्योऽन्नं पितृकर्मणी"ति ।

सौवर्णराजतगोष्ठोदुम्बरफल्गुपात्रैरेव परिवेषणं कार्यम् । औदुम्बरं ताम्रमयम् । गोष्ठोदुम्बरिका फल्गुशब्दवाच्या । यद्यप्यन्यत्र फल्गुशब्दो निःसारे वस्तुनि प्रसिद्धस्तथापि अत्र पात्रं पात्रमक्रमात्, अत्र च निःसारवस्तुनोऽनुपयोगात् । अथवा सौवर्णादिपात्रापेक्षया निःसारत्वम्, आलङ्कारिकाश्च तथैवाभिगदन्ति ।

"गोष्ठोदुम्बरिका फल्गु रराटीफल्गुवाटिका" ।

गवामुपवेशनार्था गोष्ठा ।

"नायसेन समं नैव श्राद्धे तु परिवेषयेत् ।

तस्मादन्तरितं देयं पर्णेनाथ तृणेन वे"ति ।

ततश्च एकहस्तप्रतिषेध आनयनविषयः परिवेषणं त्वेकेनैव वामस्य निषेधात् । अत्र भोक्त्रा भागनिक्षेपादारभ्य विधानफलकपर्यन्तमशून्यमेव पाणिना तत्पात्रं कर्त्तव्यम् ।

"उभयोर्हस्तयोर्मुक्तं पितृभोज्यं निवेदितम् ।

तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः ।

तस्मात्तदन्यहस्तेन कुर्यादन्नमुपागतम् ।

भाजनं च समालभ्य तिष्ठेदालोपणावधि" ।

अत एकहस्तेन पात्रेण परिवेषणीयम् इत्यलम् ।

पूर्वं परिवेषणं विधाय पश्चात्तत्त्यक्तव्यम् । अन्यथा दोषश्रवणात् । ततः पूर्वमेव स्तोकं स्तोकं सर्वमपि देयम् । विद्यमानेषु शाकपाकादिषु यद्रोचते तद् ग्राह्यम् । अन्यत् परित्याज्यमित्यनुपपन्नत्वात् । अत्रायं सङ्कल्पः । पृथिवी ते पात्रमित्यनेन स्वाहान्तेन पात्रमभिमन्त्र्य इदं विष्णुरित्यनयर्चा अन्ने द्विजाङ्गुष्ठं निवेश्य अवगाह्य च वैश्वदेवे यज्ञोपवीती विष्णो हव्यं रक्षस्व कव्यं चेत्युक्त्वा अनन्तरं विश्वेभ्यो देवेभ्य इदमन्नं परिविष्टं परिवेक्ष्यमाणमातृप्तेरिति ऋजुदर्भयवोदकेनातिलोदकेनैव पित्रे पितामहाय प्रपितामहाय च निवेद्यापोशानं दद्यात् ।

तदाह योगी—

"दत्त्वाऽन्नं पृथिवी पात्रमिति पात्राभिमन्त्रणम्।
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ।
विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमात् ।
वारिष्वग्रप्रदत्तेषु तमङ्गुष्ठं ततः क्षिपेत्" इति ॥

अङ्गुष्ठनिवेशने विशेषः ।

"परिवृत्य च नाङ्गुष्ठं द्विजस्यान्ने निवेशनम् ।
यः करोति द्विजो मोहात्तद्वै रक्षांसि गच्छति" इति ॥

ननु कश्चित्—

"अग्नौकरणहीने तु श्राद्धे सङ्कल्पजे तथा ।
नाङ्गुष्ठेन स्पृशेदन्नं मधु वाता ऋचं जपेत्"

इति निषेधो दृश्यते । अनुपपन्नमिदं परिशिष्टबौधायनादिवाक्यैर्विरोधात् । तत्र हि अङ्गुष्ठपरिवेषणं दृश्यते । अतो यत्किञ्चिदेव ।

अत्रात्रिः—

"हस्तेनाभुक्तमन्नाद्यमिदमन्नमुदीरयेत् ।
स्वाहेति च ततः कुर्युः स्वसत्वाविनिवर्त्तनम्" ॥

इदं वैश्वदेवविषयम् । पितृविषये—

"गोत्रसम्बन्धिनामानि त्विदमन्नं ततः स्वधा ।
पितृक्रमादुदीर्येति स्वसत्वं विनिवर्त्तयेत्" इति ॥

स्वसत्वनिवृत्तिस्तु इदं देवेभ्यो न ममेत्येवंरूपा । एतच्च दम्पती कुर्यातामु । त्रिकाण्डमण्डना अत्राहुः ।

"त्यागं तु सर्वथा कुर्यात् तत्राप्यन्यतरस्तयोः ।

उभावप्यसमर्थौ चेत् नियुक्तः कश्चन त्यजेत्" इति ॥

इदमेव स्मृतिरत्नावलीकाराणामभिमतम् ।

ततस्तुल्यमभिधत्ते लघुयमः—

"अन्नहीनं क्रियाहीनं मन्त्रहीनं च यद्भवेत् ।

सर्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत्" ॥

अत्र विशेषः—अत्रोपविष्टद्विजैर्निषेधाद् बलिदानं न कार्यम् ।

"पितॄणामन्नमादाय बलिं यस्तु प्रयच्छति ।

स्तेयेन ब्राह्मणस्तेन स सर्वः स्तेयकृद्भवेत्"

इति भरद्वाजस्मरणात् ।

अत्रात्रिश्च—

"दत्ते वाऽप्यथवाऽदत्ते भूमौ यो निक्षिपेद् बलिम् ।

तदन्नं विफलं याति निराशैः पितृभिर्गतैः" इति ॥

अनन्तरं कृत्यमुच्यते । तत्र प्रचेताः—

"अपोशानमथादाय सावित्रीं त्रिर्जपेदथ ।

मधु वाता इति त्रिचमधीत्यैकं त्रिकं तथा" इति ।

सव्याहृतिकां सावित्रीं जपेत् । तथा व्यासः—

"जुषध्वमिति ते चोक्त्वा सम्यग्विधृतभाजनाः ।

कृतमौनाः समश्नीयुरपोऽशानादनन्तरम्" इति ॥

अत्रावसरे अपहता इति सर्वतस्तिलान् विकिरेत् । अत्र मन्त्रः—

"यईश्वरो हव्यसमस्तकव्यभोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।

यत्सन्निधानादपयान्तु सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे" ।

इत्युच्चार्य द्विगुणदर्भतिलोदकं गृहीत्वा ॐ भूर्भुवः स्वः तत्त्व-मध्वमिति विनीतः सन् कोमलया वाचा ब्रूयात् । पितृस्वरूपी जनार्दनो वासुदेवो भगवान् श्रीहरिः प्रीयताम् ।

तथाच विष्णुपुराणे—

"ततोऽन्नं मृष्टमत्यर्थमभीष्टमिति संस्कृतम् ।
दत्वा जुपध्वमिच्छन्तो वदेदेतदनिठुरम्" इति ॥

अत्र धौम्यः—

"पादद्वयन्द्वयामाक्रम्य यो भुङ्क्ते नापदि द्विजः ।
नैवासौ भोज्यते श्राद्धे निराशाः पितरो गताः" इति ।

शौनकः—

"भुक्तशेषं न भुञ्जीत पीतशेषं पिवेन्न च ।
न चैवोपविशेत्पङ्क्तौ यतेर्वा तापसस्य वा" ॥

नानप्रस्थास्तापसाः । एकपङ्क्तिनिषेधात् पृथक् पङ्क्तौ दोषाभावः । पृथक्त्वंच नामभिरेव ।

अग्नौकरणभवं पृथक् न भोक्तव्यं किन्तु मिश्रीकृत्य भोक्तव्यं केवलभक्षणे निषेधात् ।

"यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् ।
तत्तेन सह भोक्तव्यं पृथग्भावो न विद्यत" इति ॥

प्रचेताः—

"नान्नपानं प्रभूतमिति ब्रूयुरन्यत्र हस्तसंज्ञया तामपि प्रभूतं गृहीत्वोत्सृजेदि"ति । तथा—

"रुच्या शून्यमन्नं जातु भुङ्क्ते त्वन्नं विलोकयेत् ।

पीत्वा चापो न चाश्नीयाम् पत्रं दृष्टमगर्हितम् ।
सर्वेन्द्रियाणां चापल्यं पादचापल्यमेव च ॥

दन्तच्छेदं हस्तपानं वर्जयेच्चातिभोजनम्" इति । हस्तपानमित्यस्यायमर्थः । पाणिनोदकं न पातव्यमपि तु पात्रेणैवेति । ततश्चायं नियमः—भोजनमन्तरेण हस्तेनैव पातव्यं न पात्रेण, भोजने तु पात्रेणैव न हस्तेनेति ।

तदुक्तं चतुर्विंशतिमते--

"प्रतिषिद्धं च नाश्नीयात्पवित्रमपि वा घृतम् ।
हस्तादृतेऽम्बु नाद्येत नाश्नन् पात्रादृते पिबेत्' इति विशेषः ।
"यस्तु पाणितले भुङ्क्ते स च स्वायुः समश्नुते ।

अङ्गुलिं नोद्धरेद्यस्तु तुल्यं गोमांसभक्षणम्" इति । आयुषा सह भुङ्क्ते इति यावत् । ग्रासत्समये तर्जन्यङ्गुल्युद्धरणं न कर्तव्यम् । नियुक्तो न किंचित्परिवर्जयेत् । हस्तसंज्ञया निषेधः कर्तव्यः ।

"भग्नपृष्ठो न भुञ्जीत बहिर्जानु तथैव च ।

न हसन् न वदन् पात्रं नोद्धरेज्जानु पातयेत् । उभयजानु न पातयेत् । दात्रा इदमलवणमिदमीदृशमिति पृष्टेऽपि न वक्तव्यम् ।

"श्राद्धे नियुक्तो भुञ्जीते"त्यादिनोभयोर्नियेधात् ।

वाशिष्ठश्च--

"हविर्गुणा न वक्तव्या यावन्न पितृतर्पणम् ।
तर्पितैः पितृभिः पश्चाद्वक्तव्यं शोभनं हविरि"ति ॥

स्वस्तिवाचनानन्तरं वाच्यमित्यर्थः । अपेक्षितवस्तुनिवारणं हस्तेनैव कार्यं न तु हुङ्कारेण ।

"हुङ्कारेणापि यो ब्रूया" दित्यादिनिषेधात्। भोजनमपि निःशेषं न कार्यम्।

"भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथञ्चन" इति वचनात्।

क्षीरपायसमधुसक्तुघृतानि तु नैव परित्यजेत्। क्षीरादिव्यतिरिक्तस्य दासवर्गभागधेयतया परित्याज्यता।

भोजनोपक्रमानन्तरं कृत्यम्—"सप्रणवां सव्याहृतिकां गायत्रीं जपित्वा रक्षोघ्नानि सूक्तानि पित्र्यमन्त्रान् पुरुषसूक्तमप्रतिरथं ब्रह्मविष्णुरुद्रार्कसोमेन्द्राग्निबृहद्रथन्तरज्येष्ठसामानि मधुब्राह्मणं मण्डलब्राह्मणं विविधसामजप पुराणधर्मशास्त्रप्रमुखानि अन्यान्यपि पवित्राणि जपेत्।

मनुरपि—

"स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि॥
आख्यातानीतिहासांश्च पुराणान्यखिलान्यपी"ति।

परिवेषणं च सव्येनैव—

"अपसव्येन यो दद्यात् श्राद्धार्थमुपकल्पितम्।

कृपणो मन्दबुद्धिस्तु न स श्राद्धफलं लभेदि"ति जमदग्निवचनात्।

अत्र विशेषः—

"अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम्।
न याचते द्विजो मूढः स भवेत्पितृघातकः" ॥

न चात्र—

"यो याचयति दातारं ब्राह्मणो ज्ञानवर्जितः ।
पितरस्तस्य कुप्यन्ति दातुर्भोक्तुर्न संशयः ॥
कृच्छ्रद्वादशरात्रेण मुच्यते नात्र शंसयः"
इत्यादि वचनेन विरोध इति वाच्यम् ।

तयोरनुपकल्पितवस्तुविषयत्वात् । शङ्खलिखिताभ्यां तु उपकल्पितवस्तुनोऽप्यन्यूनाधिकस्य दानप्रतिग्रहयोर्निषिद्धत्वमुक्तम् ।

तथाहि—

"नात्यन्ताधिकं दद्यान्न प्रतिगृह्णीयात्" इति। दातृनियमो दृश्यते—

ब्रह्माण्डे—

"न चाश्रु पातयेज्जातु न शुक्तां गिरमीरयेत् ।
न चोद्वीक्षेत भुञ्जानं न च कुर्वीत मत्सरम् ॥
न दीनो नापि वा क्रुद्धो न चैवान्यमना नरः ।
एकाग्रमाधाय मनः श्राद्धं कुर्यात्सदा बुधः" इति ।

अत्र विशेषः । भोजनोपविष्टब्राह्मणानां स्पर्शे परस्परं प्राप्ते न भोजनं परित्याज्यं किन्तु भोक्तव्यमेव । भोजनोत्तरं च गायत्र्यष्टशतं जपेत् ।

"श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत्" इति शङ्खस्मरणात् ।

तत्र विशेषः—

"अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः ।

पीतावशिष्टं तोयादि पुनरुद्धृत्य वा पिबेत् ॥
खादितार्धं पुनः खादेत् मोदकानि फलानि च ।
मुखेन वा ग्रसेदन्नं निष्ठीवेद्भोजनेऽपि वा ॥
न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन"

इत्यादिनियमैर्भोजने कृते इदं कार्यम्—

"तृप्तान् बुध्वाऽन्नमादाय सतिलं पूर्ववज्जपेत्" इत्यादिना विकिरं कुर्यात् । तत्र पात्रेऽन्नमादाय तृप्ता स्थ इति पृष्ट्वा तृप्ता स्मेति तैः प्रत्युक्तः शेषमन्नमस्ति किं क्रियतामिति पृष्टः इष्टैः सह भुज्यतामिति प्रत्युक्तः पितृब्राह्मणस्य पुरत उच्छिष्टसन्निधौ दक्षिणाग्रदर्भान्तरितायां भूमौ तिलोदकप्रक्षेपपूर्वकं ये अग्निदग्धा इति अनयर्चा निक्षिप्य पुनस्तिलोदकं निक्षिपेत् । मतिविभ्रमाद्वाऽऽचमनाकरणे दोषश्रवणात् तत आचमनं कार्यम् ।

तत्र मत्स्यः—

"असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।

उच्छिष्टभागधेयानां दर्भेषु विकिरासनम्" इति । सत्यप्यस्मिन् विधिर्द्वैध इत्याचक्षते विचक्षणान्यायमर्माभिज्ञाः ।

अत्र केचित् पिण्डाग्रतः षडङ्गुले विकिर इत्याहुः । अपरे उच्छिष्टस्य पुरत इत्याहुः । आद्ये पिण्डवत्पतनं विकिरस्येति तौल्वलिस्मरणं प्रमाणम् । द्वितीये विकिर उच्छिष्टैः प्रतिपादयेदिति गौतम स्मरणं प्रमाणम् । अतः पक्षद्वयमपि शास्त्रत एव प्राप्तमिति प्राप्ते सिद्धान्तः स्मृत्यन्तरात्—

"उच्छिष्टैरेव विकिरं सदैव प्रतिपादयेत् ।
अन्यथा कुरुते यस्तु निराशास्तस्य देवताः"
इति आद्य एव युक्तः ।

ततो ब्राह्मणहस्ते गण्डूषार्थं सकृत्सकृदपो दद्यात् ।

तथा पितृब्राह्मणपूर्वं गण्डूषाद्यर्थमुदकं देयम् । अत्र आदौ हस्तप्रक्षालनं वा गण्डूषं वेति सन्देहे हस्तप्रक्षालनात्पूर्वं गण्डूषग्रहणे उच्छिष्टभक्षणापत्तेः पूर्वं हस्तप्रक्षालनमिति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते पूर्वं गण्डूषमिति । न च हस्तस्थितोच्छिष्टभक्षणा इति वाच्यम् । तदपेक्षया मुखस्थितस्य दुष्टत्वात् उत्तरापोशानातिरेकेण मुखस्थितस्य रुधिरतुल्यत्वात् । अत एवातिशिष्टाविप्रकर्षभिया तत्रैवाचमनकर्म कुर्वन्ति न दूरे । ततः पूर्वं गण्डूषमिति ।

"हस्तं प्रक्षाल्य यश्चापः पिबेद् भुक्त्वा द्विजः सदा ।
तदन्नमसुरैर्भुक्तमि"ति स्मृतेः।

ततोऽप्रक्षालितकर एव हस्तधावनगण्डूपानन्तरं तृप्तिमश्न इत्यपरे वदन्ति । वचनं च पूर्वं पितॄणां ततो देवानामित्यपि ।

"वैश्वदेवनिविष्टानां चरमं हस्तधावनमि"ति स्मरणात् ।

## अथ पिण्डनिर्वपणमभिधीयते ।

अत्र पिण्डपितृयज्ञकल्पातिदेशेन चरुश्रपणसद्भावे अग्नौकरणशिष्टचरुशेषेण सह सर्वमन्नमुपादायाग्निसन्निधौ पिण्डान्दद्यात् । चरुश्रपणाभावे अग्नौकरणावशिष्टं यत् सार्ववर्णिकमन्नं तत्सर्वमुपादाय तिलमिश्रं दक्षिणामुख उच्छिष्टसन्निधौ पिण्डान् दद्यात् ।

तदाह योगी:—

"सर्वमन्नमुपादाय सतिलं दक्षिणामुखः।
उच्छिष्टसन्निधौ पिण्डान दद्याद्वै पितृयज्ञवत्"।

तत्र प्रचेताः—

"अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत्।
अथोपस्पृश्यतां वापि प्राप्नुवन्ति न विन्दत" इति।

अत्र द्वौ पक्षौ वागुरिसम्मतौ—

"बद्धमुष्टिकरोऽरत्निररत्निरकनिष्ठिक" इति।

भास्करोऽन्यथाह—

"पात्राणां बाहुमात्रेण पिण्डदानं विधीयते।
कराभ्यामुल्लिखेत् स्फ्येन कुशैर्वापि महीं द्विजः" अयं तृतीयः।

अत्र चतुर्थः—

"पितृब्राह्मणतः स्थानादग्रतस्त्रिष्वरत्निषु।
उच्छिष्टं तद्विजानीयान्नोच्छिष्टासनसन्निधौ" इति।

एतेषु चतुर्ष्वपि पक्षेषु मध्ये देशकालाद्यपेक्षया व्यवस्था।

अत्रिः—

"पितॄणामासनस्थानात् अग्रतस्त्रिष्वरत्निषु" इति।

अत्र पक्षद्वयम् पूर्वमेव पिण्डदानमित्येके भोजनोत्तरमिति द्वितीयम्।

"पिण्डनिर्वपणं केचित् पुरस्तादेव कुर्वते।
भुञ्जानेषु तु विप्रेषु भुक्तवत्सु तथाऽपर" इति स्मरणात।

शाखापेक्षया विकल्पः । तत्राप्रशस्तेषु श्राद्धेषु पूर्वं, प्रशस्तेषूत्तरम् ।

अत्र नवश्राद्धप्रभृतीन्यप्रशस्तानि, सांवत्सरिकापरपक्षादीनि प्रशस्तानि । तृप्तापरकालकर्तव्यतायामपि द्वैधम्, आचमनात् पूर्वमूर्ध्वं वेति । आश्वलायनशाखिनां तु उभयपक्षे विकल्पः ।

"भुक्तवत्सु अनाचान्तेषु तेषु पिण्डान्निदध्यादाचान्तेषु वे"ति आश्वलायनस्मरणात् । तत्प्रकारो ब्रह्माण्डेऽभिधीयते—

"सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः ।
प्रघर्षणं ततः कुर्याच्छ्राद्धकर्मण्यतन्द्रितः ।
कण्डनं पेषणं चैव तथैवोल्लेखनक्रिया ।
वज्रेणाथ कुशैर्वापि उल्लिखेत्तु महीं द्विजः" इति ।

तण्डुलादेः कण्डनं, शाकादेश्छेदनं, पेषणं तण्डुलादेः, भुवः कर्षणमपहता इति मन्त्रेण उल्लेखनम् । अत्र मन्त्रः कात्यायनेन दर्शितः—

"असावेतत्त इति ये च त्वामन्विति चैक इति" ।

असावित्यमुकगोत्र अमुकशर्मन् इति सम्बोध्य एतत्ते इति मन्त्रेण पिण्डदानं सव्यं जान्वाच्य कुर्यात् । पिण्डदानोत्तरकालं मनुः—

"न्युप्य पिण्डान् पितृभ्यस्तु प्रयतो विधिपूर्वकम् ।
तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्" इति ।

विष्णुराह—

"अत्र पितरो मादयध्वमि"ति । तत्र अत्र पितर इत्युक्त्वोदङ्मु-

खः अमीमदन्त पितर इति जपतीति । अमीमदन्तेत्यनुमन्त्रणानन्तरं अवघ्राय शुन्धन्ताम्पितर इति पूर्ववत्पिण्डोपरि उदकनिनयनम् । ततोऽसाववनेनिक्ष्वेत्यवनेज्य वस्त्रदशामादाय एतद्वः पितरो वास इति पिण्डे निक्षिप्य अञ्जनगन्धलेपन ताम्बूलवस्त्रदक्षिणादिभिः पूजयेत् ।

व्यासः—

पिण्डप्रमाणमाह—

"त्रिहायनस्य वत्सस्य विकृत्यास्यं यथा सुखम् ।
तथा कुर्यात्प्रमाणं तु पिण्डानां व्यासभाषितम्" इति ।

अयं भावः—पिण्डाः कर्तव्या इत्थं कपित्थप्रमाणम् बिल्वफलप्रमाणं वा कुक्कुटाण्डप्रमाणं वा वदरीफलप्रमाणं वा । तदुक्तमङ्गिरसा—

"कपित्थबिल्वमात्रान्वा पिण्डान्दद्याद्विधानतः ।
कुक्कुटाण्डप्रमाणं वा केषां वाऽऽमलकैः समान् ॥
नवश्राद्धे स्थूलतरं तस्मादपि तु निर्वपेत्" ।

तस्मादपि स्थूलतरमाशौचे प्रत्यब्दादावेकोद्दिष्टे ततोऽधिकतरं नवश्राद्धद्वादशाहादिसपिण्डीकरणान्ते ततोऽप्यधिकतरमाशौचान्तर्वर्तिपिण्डे प्राचीनं प्रमाणचतुष्टयं पार्वणश्राद्धमिति विवेकरहस्यम् ।

एवं पिण्डान् निर्वर्त्य स्वर्चितमस्त्विति यज्ञोपवीती भूत्वा विधिं सम्पाद्य सुप्रोक्षितमस्त्विति श्राद्धदेशं सम्प्रोक्ष्य प्रादक्षिण्येन ब्राह्मणहस्ते वारि पुष्पाक्षतांश्च दत्वा सकुशान् यवांश्च पनरुदकादि

दत्वा अघोराः पितरः सन्त्वित्युक्ते द्विजैस्ते गोत्रं वर्धतामिति न स्तथेत्युक्ते तैश्च पुनः दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद् बहु देयं च नोऽस्त्विति सत्या एता आशिषः सन्तु सन्तु इत्युक्तस्तैः पुनरिति ।

एतदनन्तरं पात्रचालनं कृत्वा स्वस्तिवाचनं कुर्यात् ।

"अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः ।
निराशाः पितरो यान्ति यथाऽऽयान्तितथा गताः"

इति नारायणवचनात् ।

पात्रचालने विशेषः ।

"पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः ।
न स्त्रीभिर्न च बालेन नासजात्या कथञ्चन" इति ।

ततोऽक्षय्यमस्त्विति ब्राह्मणहस्ते जलं दद्यात् । ततो यथाशक्ति दक्षिणां दत्वा स्वधां वाचयिष्ये इत्युक्त्वा तैर्ब्राह्मणैर्वाच्यतामित्युक्ते ऽनुज्ञातः प्रकृतपित्रादिभ्यो मातामहादिभ्यश्च स्वधोच्यतामित्युदाहृत्य तैरस्तु स्वधेत्युक्ते भूमौ जलमासिच्य विश्वेदेवा इत्युक्ते दातारो नोऽभिवर्धन्तामित्यादि मन्त्रं वाचयित्वा प्रियवाचा प्रणामं विधाय वाजे वाजे इति जपित्वा धन्या वयं भवच्चरणकमलयुगल पवित्रीकृतमस्मद्गृहमिह दिनमिति । अतो भवद्भिरनुगृहीता वयमिति प्रणिपातप्रदक्षिणापूर्वं नमस्कृत्य विसर्जयेत् ।

अत्र विशेषः ।

"पत्न्यै प्रजार्थं दद्यात्तु मध्यमं मन्त्रपूर्वकम्" इति । मध्यमं मध्यमपिण्डम् । अत्र मन्त्रः—"आधत्त पितरो गर्भं मन्त्रः

सन्ततिदायकः" ।

तथा च मनुः—

"पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु तथा पिण्डमद्यात् सम्यक् सुतार्थिनी" ॥

पत्नीसन्निधानाभावे सपत्न्या गर्भरोगवत्वे वाऽजीर्णावृषभं छागं वा भोजयेत् तदभावे आकाशं गमयेत् पिण्डं व्रतस्थो दक्षिणामुखः ।

"पितॄणां स्थानमाकाशं दक्षिणा दिक् तथैव च" ।

देवलः—

"अग्निब्राह्मणाऽजगोर्वा भक्षयेदप्सु वेति" ।

इदं पुत्रेच्छाविषयम् । तीर्थश्राद्धे पिण्डानामप्सु प्रक्षेप इति । वैश्वदेवः सर्वाहिताग्निना श्राद्धात्पूर्वमेव कर्तव्यः । अनाहिताग्निश्चेत् श्राद्धोत्तरकालमिति व्यवस्था इत्याह्निके । सम्यग् बहूक्तमित्यत्यलमनेन ।

प्रौढ श्री द्विजराजवंशतिलकालङ्कारहीरः प्रभु-
र्भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारे श्राद्धविनिर्णयेऽति चतुरे श्रीमान् दलाधीश्वरः॥१॥
निजामसाह साम्राज्यधुरन्धर महीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥२॥

इति श्रीमल्लक्ष्मीनृसिंहचरणसरोरुहभ्रमरसकल भूमण्डल समस्तयवनाधीश्वर श्रीनिजामसाह याज्ञवल्क्यशाखाप्रवर्तक श्रीमद्दलपतिराजविरचिते श्रीनृसिंहप्रसादे श्राद्धसारः सम्पूर्णः ।

इति श्रीमच्चतुर्दशभुवनैकनाथ महेन्द्रादिदेवपूजितचरणकमल सटाडम्बरव्याप्तभुवनत्रय भक्तानुग्रह कपिप्रसन्नवदन प्रल्हादप्रणयवरदकर दानैक्यजात सकल जगदेवसुदेवश्रीलक्ष्मीनृसिंहचरणयुगलसरोरुहलसत्सूर्यवंशतिलक औत्कल गौड़गुर्जरमालवमागध पाञ्चाल कर्णाटकाऽऽन्ध्रनेक पौढयजास्पृहणीयकीर्ति सकलभूमण्डलाखण्ड दिङ्मण्डलनीयमाननिजभुजार्जितप्रतापासादित सकल साम्राज्यपरमवैभव स्वपदच्युतसंस्थापितानेक सामन्तचक्र चूड़ामणिकिरणरञ्जित चरणारविन्द सकल भूमण्डलमण्डन श्रीमत्प्रौढ़प्रताप महाराजाधिराज सर्वपुरिसुन्दरिदेवांगरिवराधीश्वर समस्तयवनाधीश्वर श्रीमन्महाराजनिजामसाह सकल विद्याविशारद याज्ञवल्कीयलुप्तशाखाप्रवर्तक श्रीवल्लभात्मज श्रीवल्लपण्डितप्रसादासादित श्रीसूर्यपण्डिताभिध गुरुमन्वादिप्रणीत नीति शास्त्राभिज्ञ महाकार्य स्वकार्यावेक्षण प्रतिनिधीकृत श्रीमहाराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे

श्राद्धसारः सम्पूर्णः ।

तृतीयः सारः ।



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvalī Bhāskara, (किरणावलीभास्कर) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A, Rs. 1-1.

No. 2—The Advaita Chintāmaṇi, (अद्वैतचिन्तामणि) [वेदान्त], by Rañgoji Bhaṭṭa,
Ed. with Introduction etc by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs 1-12

No. 3—The Vedānta Kalpalatikā, (वेदान्तकल्पलतिका) [वेदान्त], by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, (कुसुमाञ्जलिबोधिनी) [न्याय], a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra (रससार) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)—The Bhāvanā Viveka (भावनाविवेक) [मीमांसा], by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6—(Part II)—Ditto Ditto Rs. 0-12

No. 7—(Part I)—The Yoginīhṛdaya dīpikā, (योगिनीहृदयदीपिका) [तन्त्र], by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—(Part II) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī (काव्यडाकिनी) [काव्यशास्त्र], by Gaṅgānanda Kavīndra.

Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–10

No. 9—(Part I)–The Bhakti Chandrikā (भक्तिचन्द्रिका) [भक्ति], a Commentary on S'āndilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, (सिद्धान्तरत्न) [गौडीयवैष्णवदर्शन], by Baladeva Vidyābhūṣaṇa.

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1–2

No. 10–(Part II)—Do. Do. Rs. 2–12

No. 11–The S'rī Vidyā Ratna Sūtras, (श्रीविद्यारत्नसूत्र) [तन्त्र], by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.

Ed. with Introduction etc. by Narāyaṇa S'āstrī Khiste, Sāhityāchārya. Rs. 0–9

No. 12–The Rasapradīpa, (रसप्रदीप) [अलङ्कार], by Prabhākara Bhaṭṭa.

Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha, (सिद्धसिद्धान्तसंग्रह) [नाथमार्ग] by Balabhadra.

Ed. with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, (त्रिवेणिका) [अलङ्कार], by Āśādhara Bhaṭṭa.

Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15–(Part I)–The Tripurārahasya, (Jñāna Khaṇḍa) (त्रिपुरारहस्य, ज्ञानखण्ड) [तान्त्रिकदर्शन],

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A Rs. 0–14

No. 15–(Part–II)—Do. Do. Rs. 2–4

No. 15–(Part III)—Do. Do. Rs. 2–0

No. 15–(Part IV)—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16–The Kāvya Vilāsa, (काव्यविलास) [अलङ्कार], by Chiranjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya Rs. 1–2

No. 17–The Nyāya Kalikā, (न्यायकलिका) [न्याय], by Bhaṭṭ Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A. D. Litt. Rs. 0–14

No. 18–(Part I)–The Goraksa Siddhānta Saṅgraha. (गोरक्षसिद्धान्तसंग्रह) [नाथमार्ग],
Ed. with a Prefatory Note by Gopinath; Kaviraj, M. A., Rs. 0–14

No. 19–( Part. I )–The Prākṛita Prakaśa (प्राकृतप्रकाश) [प्राकृतव्याकरण]
by Vararuchi with the Prākṛita Sañjīvanī by Vasantaraja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4

No. 19–( Part.II ) Ditto Ditto Rs. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka ( मांसतत्त्वविवेक ) [ धर्मशास्त्र ], by Viśvanātha Nyāyapañchanana Bhaṭṭāchārya.
Edited with Introduction etc. by Pandit Jagannatha Sastri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhanta Mālā (न्यायसिद्धान्तमाला) [ न्याय ], by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by Dr. Mangal Deva Sastrī, M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–4

No. 21–( Part–II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhi Slokachaturdaśī ( धर्मानुबन्धिश्लोकचतुर्दशी) [धर्मशास्त्र], by S'ri Sesa Kṛṣṇa with a Commentary by Rāma Pandit.

Edited with Introduction etc. by Nārayaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23–The Navarātrapradīpa (नवरात्रप्रदीप) [धर्मशास्त्र], by Nanda Pandit Dharmādhikārī.

Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra–S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by Pândit Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares. Rs. 2-0

No. 24–The S'rī Rāmatāpinīyopaniṣad (रामतापिनीयोपनिषद्) [उपनिषद्], with the Commentary called Rama Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'astrī Vetāla Sāhityopādhyāya, Post–Achārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kaviraja, M. A., Principal, Government Sanskrit College, Benares. Rs. 3-12

No. 25–The Sāpiṇḍyakalpalatikā (सापिण्ड्यकल्पलतिका) [धर्मशास्त्र], by Sadāśivadeva alias Āpadeva with a commentary by Nārāyana Deva.

Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyaya, Sadholal Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26–The Mṛgāṅkalekhā Nāṭikā (मृगाङ्कलेखानाटिका) [नाटिका], by Viśvanātha Deva Kavi.

Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sahityāācharya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27–The Vidvachcharita Panchakam (विद्वच्चरितपञ्चकम्) [निबन्ध] By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavana Library, Benares. With an Introduction by Gopināth Kaviraja, MA, Principal, Govt. Sanskrit College, Benares. Rs. 2-0.

No. 28--The Vrata Kos'a (व्रतकोश) [धर्मशास्त्र], by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt Sanskrit College, Benares. Rs. 4-0

No. 29-The Vṛtti dīpikā (वृत्तिदीपिका) [व्याकरण], By Mauni S'rī Kṛṣṇ Bhatta.

Edited with Introduction etc by Pt.Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-The Padārtha Maṇḍanam ( पदार्थमण्डन ) [ वैशेषिक ], By S'rī Veṇīdatta.

Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31-( Part I)-The Tantraratna ( तन्त्ररत्न ) [ मीमांसा ], by Parth Sārathi Mis'ra.

Edited by M. M. Dr Ganganatha Jha, M. A, D. Litt, Vice-Chancellor, Allahabad University Allahabad. Rs. 114

No. 31-( Part II ) Ditto. Ditto.

Edited by Pt. Gopāl S'āstri Nene, Govt. Sanskrit College, Benares. Rs. 2-4

No. 32-The Tattvasār ( तत्त्वसार ) [ न्याय ], by Rākhāldasa Nyāyaratna.

Edited with Introduction etc by. Harihara S'astri, Benares Hindu University. Rs. 1 0.

No. 33-( Part I ) The Nyaya Kaustubha ( न्यायकौस्तुभ ) [ न्याय ], by Mahadeva Puntamkar.

Edited with Introduction etc by Umes'a Mis'ra, M. A., Allahabad University, Allahabad. Rs. 3-4

No. 34-( Part I ) The Advaita Vidyātilakam ( अद्वैतविद्यातिलकम् ) [ शाङ्करवेदान्त ], by S'rī Samarapuṅgava Dīkṣita.

With a Commentary by S'rī Dharmayya Dīkṣita.

Edited with Introduction, etc, by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares. Rs. 1-4

No. 35-The Dhama Vijaya Nāṭaka ( धर्मविजयनाटक ) [ नाटक ], by Bhūdeva S'ukla.

Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares. Rs. 1 4

No. 36–The Ānanda Kanda Champū ( आनन्दकन्दचम्पू ) [ चम्पू ], by Mitra Miśra.

Edited, with a Foreword by Gopinath Kaviraj, M. A, by Nanda Kishore Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 3–8

No. 37–The Upanidāna Sūtra ( उपनिदानसूत्रम् ) [ वेद ], Edited with Introduction by Dr. Mangaldeva S'āstri, M. A., D. Phil. Rs. 1–0

No. 38–The Kiraṇāvali prakās'a dīdhiti ( Guṇa ), ( किरणावली-प्रकाशदीधिति ) [ वैशेषिक ], by Raghunāth S'iromani.

Edited by Pandit Badrināth Sāstri, M. A., Lucknow University Rs. 1–12

No. 39–The Rāma Vijaya Mahakāvya, ( रामविजयमहाकाव्य ) [ काव्य ] by Rupanātha.

Edited by Pt. Ganapatilal Jha, M. A. Rs. 2–0

No. 40–(Part I ) The Kālatattva Vivechana (कालतत्वविवेचन) [धर्मशास्त्र], by Raghunātha Bhaṭṭa.

Edited with a Foreword by Gopinātha Kaviraja M.A by Nanda Kishore S'arma Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 4–0

No. 40–( Part II ) Do Do Rs. 3–8

No. 41–(Part I) The Siddhānta Sārvabhauma (सिद्धान्तसार्वभौम) [ज्योतिष], by S'rī Munīśvara.

Edited with Introduction etc. by Jyautiṣāchārya Pandit Murlidhara Ṭhakkura, late Sadholal Scholar, Sanskrit College, Benares Rs 3–0

No. 42–The Bheda Siddhi (भेदसिद्धि) [न्याय], by Vis'vanātha Pañchānana Bhaṭṭāchārya.

Edited with notes etc., by Nyāya Vyākaranāchārya Pandit Sūrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College Benares. Rs. 1–12

With a Foreword by Pt. Gopināth Kaviraj, M A., Principal Govt. Sanskrit College, Benares.

No. 51-52. Advaita Siddhānta Vidyotana (अद्वैतसिद्धान्तविद्योतन) [वेदान्त] by Brahmānanda Sarasvatı

and

Nṛisimha Vijnāpana (नृसिंहविज्ञापन) [वेदान्त], by Nṛisimhāśrama. Edited with notes, Introduction etc. by Pandit Sūrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares.

No. 53–Nṛisimha Prasāda-Vyavaharsāra (नृसिंहप्रसाद–व्यवहारसार) [धर्मशास्त्र], by Dalapatı Rāja.

Edited with Introduction etc. by Pandit Vināyaka S'astri Tillu, Research Scholar, Sanskrit College, Benares.

No. 54–Nṛisimha Prasāda–Prayaśchitta Sara (नृसिंहप्रसाद प्रायश्चित्तसार) [धर्मशास्त्र], by Sri Dalapati Raja.

Edited by Pandit Nanda Kishore Sharma and Nanda Kumar Sharma Sahityacharya

No. 55–Nṛisimha Prasâda–S'rādha Sāra (नृसिंहप्रसाद श्राद्धसार) [धर्मशास्त्र].

Edited by Pandit Vidyadhara Miśra, College of Oriental Learning, Benares Hindu University, Benares.

## Works in the press

No. 1. Dakṣiṇāmūrti Saṃhitā (दक्षिणामूर्तिसंहिता) [तन्त्र],

Edited by Pt. Nārāyna S'āstri Khiste.

No. 2. Ās'valāyana S'rauta Sūtra with Sidhhānti Bhāshya (सिद्धान्ति भाष्यसहित आश्वलायनश्रौतसूत्र) [वेद],

Edited by Dr. M. D. S'āstri, M. A., D. Phil.

No. 3. Nīti mañjarī (नीतिमञ्जरी) [वेद], by Dyā Dvivedī.

Edited by D. Mangal deva Sastri. M. A., D. Phil.

No. 4. Nyāya Kaustubha ( Part II ) Anumanakhanda (न्यायकौस्तुभ-अनुमानखण्ड) [न्याय], by Mahādova Puntamkar.
Edited by Pt Goswami Damodara S'āstri.

No. 5. Mīmānsā Chandrikā ( मीमांसाचन्द्रिका ) [ मीमांसा ], by Brahmānanda Sarsvati.
Edited by Pt, Haran Chandra Bhattāchārya S'āstri.

No. 6. Ganita Kaumudī (गणित कौमुदी) [गणित], by Nārāyana Pandit
Edited by Pt. Padmakar Dvivedi.

No. 7. Kiranavali prakasa, (Part II) ( किरणावली प्रकाश ) [वैशेषिक], by Vardhamana Upadhyaya.
Edited by Pt. Badrinath S'astri, M. A.

No. 8. Tantraratna (Part III) (तन्त्ररत्न) [ मीमांसा ], by Partha Sarathi.
Edited by Pt. Gopal Sastri Nene,

No. 9. S'udrachāra S'iromani (Part II) (शूद्राचारशिरोमणि) [धर्मशास्त्र].
by S'eṣa Kṛṣṇa.
Edited by Pt. Nārayana S'astri Khiste.

No. 10. Kāvya prakāśa dīpika ( Part II ) ( काव्यप्रकाशदीपिका ) [ अलङ्कार ], by S'ri Chandīdasa.
Edited by Pt. S'ivaprasada Bhattāchārya, M. A.

No. 11. Smārtollasa (Part II) (स्मार्तोल्लास) [कर्मकाण्ड], by Siva prasada.
Edited by P. Bhagavata prasad Miśra.

No. 12. Bhagavan nama mahatmya Samgraha ( भगवन्नाममाहात्म्य-संग्रह ) [ भक्तिशास्त्र ], by Raghunāthendra Yati, with com. by Ananta S'āstri Phadke.
Edited by Pt. Ananta S'āstri Phadke.

No. 13. Kalatattvavivechna ( कालतत्त्वविवेचन ) [ धर्मशास्त्र ], by Ragunātha Bhatta, Part III.
Edited by Pt. Nanda kishore Sharma.

No. 14. Siddhānta Sarvabhauma ( सिद्धान्तसार्वभौम ) [ ज्योतिष ], by Munīśvara. Part-II.
Edited by Pt. Murlidhar Thakkur.

## Works in the press.

No. 15 Upendra Vijnāna Sūtra ( उपेन्द्रविज्ञानसूत्र ) [ दर्शन ],
Edited by Dr. M. D. Shastri.

No. 16. Nyāyāmṛita Saurabha ( न्यायामृतसौरभ ) [ माध्ववेदान्त ], by Vanamāli.
Edited by Pt. Nrisimha Achārya.

No 17. Vâsistha Darśana (वाशिष्ठदर्शन) [वेदान्त],
Edited by Dr. B. L. Atreya M A., Ph. D. Professor, Benares Hindu University, Benares.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopinath Kaviraj.

(c) Nirmana Kaya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Parasurama Miśra alias Vaṇi Rasala Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob

(c) S'tudies in Hindu Law (2):– its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sutra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinth Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vira S'aiva Philosophy, by Gopinath Kaviraj.

(j) Nyaya Kusumañjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Narayaṇa S'āstri Khiste.

(l) Sondala Upadhyaya, by Gopinath Kaviraj. Rs. 5

Vol. III -

(a) Index to S'abara's Bhāṣya, by the Late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānatha Jha.

(c) Theism in Ancient India, by Gopintha Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nilakamal Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Patankar. Rs 5.

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgānātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinatha Kaviraj

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans, by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G. L. Sinha. Rs 5.

Vol. V—

(a) Ancient Home of the Aryans and their migration to India by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G. L. Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkār, by Baṭukanātha S'armā and Baladeva Upādhyāya

(b) Some variants in the raeadings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītārām Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayana, by Manmatha Nātha Roy.

(g) An Index to S'abrar's Bhāṣya, by the late Col. J. A. Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra. Rs. 5

Vol. VIII.

(a) Indian Philosophy, by Tarakanatha Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S'abara's Bhāṣya, by the late Col. J. A. Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Ṛigveda, by Mangaladeva S'āstri.

(e) Mysticism in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī: a brief history of the Institution, by Manmath Natha Roy. Rs. 5

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinātha Kavirāj.

THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A

Kirana I ( In progress )

(a) Mangalam, etc, by Narāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchandra Bhaṭṭāchārya.

(c) S'rimad Āchārya Maṇḍana Mis'ra by Chinna Swami S'astri.

(d) Bhagavato Buddhasya Charitam Upades'as'cha, by Gopinatha Kaviraj.

Kirana I ( Supplement )

Sanskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sharma

Kirana II ( In progress )

(a) S'ārada Prasādanam by Nārāyana S'āstri Khiste.

(b) Chūḍāmaṇi Dars'anam by S'as'adhara Tarkachuḍāmaṇi.

To be had of

The Superintendent

Government Press, U. P.,

Allahabad.